

# SANSKRIT SELECTIONS

FOR THE

# INTERMEDIATE EXAMINATION






Revised Edition




PUBLISHED BY THE
UNIVERSITY OF CALCUTTA
1935

# विषयानुक्रमणिका


| विषयः | पृष्ठम् |
|---|---|
| **महाभारतम्—** | |
| जनमेजयं प्रति सरमायाः शापः ... ... | १ |
| धौम्यशिष्याणां चरितानि ... ... | ३ |
| अष्टकादेः शिवेश्च दानधर्म्मः ... | १७ |
| परीक्षिच्चरितम् ... ... | २२ |
| इन्द्रद्युम्नचरितम् ... ... | २८ |
| शिबिचरितम् ... ... | ३१ |
| **श्रीमद्भागवतम्—** | |
| भरतोपाख्यानम् ... ... | ३[illegible] |
| **बालचरितम्—** | |
| श्रीकृष्णजन्म ... ... | ४० |
| **वासवदत्ता—** | |
| वासवदत्तायाः शापवृत्तान्तः ... | ४३ |
| **हर्षचरितम्—** | |
| नियतेः प्रभुत्वम् ... ... | ४६ |
| **कादम्बरी—** | |
| कुमार-चन्द्रापीडस्य विद्याधिगमः ... | ५१ |
| कुमार-चन्द्रापीडस्य यौवराज्याभिषेको दिग्विजययानञ्च ... ... | ६१ |

## विषयानुक्रमणिका


| विषयः | | | पृष्ठम् |
|---|---|---|---|
| **बृहत्-कथा—** | | | |
| नागार्ज्जुन-कथा | ... | | ६७ |
| **उपमितिभवप्रपञ्चा कथा—** | | | |
| नन्दिवर्द्धनस्य यौवनप्राप्तिर्मित्रलाभश्च | | | ७१ |
| **दशकुमारचरितम्—** | | | |
| कुमारोत्पत्तिः | ... | ... | ७४ |
| द्विजोपकृतिः | ... | ... | ८२ |
| सोमदत्तचरितम् | ... | ... | ८८ |
| पुष्पोद्भवचरितम् | ... | ... | १०४ |
| अवन्तिसुन्दरीपरिणयः | ... | ... | १०८ |
| राजवाहनचरितम् | ... | ... | ११७ |
| उपहारवर्म्मचरितम् | ... | ... | १२५ |
| अर्थपालचरितम् | | ... | १३० |
| प्रमतिचरितम् | ... | ... | १४६ |
| मित्रगुप्तचरितम् | ... | ... | १५७ |
| मन्त्रगुप्तचरितम् | ... | ... | १६७ |
| गोमिनीकथा | ... | ... | १७८ |
| **काव्यमीमांसा—** | | | |
| कविचर्या राजचर्या च | ... | ... | १८२ |

# महाभारतम्

## जनमेजयं प्रति सरमायाः शापः

जनमेजयः पारीक्षितः सह भ्रातृभिः कुरुक्षेत्रे दीर्घसत्रमुपास्ते। तस्य भ्रातरस्त्रयः—श्रुतसेन उग्रसेनो भीमसेन इति। तेषु तत् सत्रमुपासीनेष्वागच्छत् सारमेयः। स जनमेजयस्य भ्रातृभिरभिहतो रोरूयमाणो[1] मातुः समीपमुपागच्छत्। तं माता रोरूयमाणमुवाच, 'किं रोदिषि, केनास्यभिहतः?' इति।

स एवमुक्तो मातरं प्रत्युवाच, 'जनमेजयस्य भ्रातृभिरभिहतोऽस्मि' इति। तं माता प्रत्युवाच, 'व्यक्तं त्वया तत्रापराद्धम्, येनास्यभिहतः' इति। स तां पुनरुवाच, 'नापराध्यामि किञ्चित्, नावेक्षे[2] हवींषि, नावलिह्ये' इति। तच्छ्रुत्वा तस्य माता सरमा पुत्रदुःखार्ता

---

[1] रोरूयमाणः—पुनः पुनरतिशयेन वा रुवन्।

[2] नावेक्षे इत्यादि—हविषामवेक्षणमपि मया न कृतम्, अवलेहनन्तु दूरतोऽपास्तम् इत्यर्थः। 'कुक्कुटः पक्षवातेन श्वा दृष्टान्नं प्रदूषयेत्' इति वचनाच्छुना दृष्टमपि हविर्दुष्यति। (नी)

तत् सत्रमुपागच्छत्, यत्र स जनमेजयः सह भ्रातृभिर्दीर्घसत्रमुपास्ते ।

स तया क्रुद्धया तत्रोक्तः, 'अयं मे पुत्रो न किञ्चिदपराध्यति, नावेक्षते हवींषि, नावलेढि, किमर्थमभिहतः ?' इति । न किञ्चिदुक्तवन्तस्ते । सा तानुवाच, 'यस्मादयमभिहतोऽनपकारी, तस्माददृष्टं[1] त्वां भयमागमिष्यति' इति ।

जनमेजय एवमुक्तो देवशुन्या सरमया भृशं सम्भ्रान्तो विषण्णश्चासीत् । स तस्मिन् सत्रे समाप्ते हास्तिनपुरं प्रत्येत्य पुरोहितमनुरूपमन्विच्छमानः परं यत्नमकरोत्, यो मे पापकृत्यां शमयेदिति ।

स कदाचिन्मृगयां गतः पारीक्षितो जनमेजयः कस्मिंश्चित् स्वविषय आश्रममपश्यत् । तत्र कश्चिदृषिरासाञ्चक्रे श्रुतश्रवा नाम । तस्य तपस्यभिरतः पुत्र आस्ते सोमश्रवा नाम । तस्य तं पुत्रमभिगम्य जनमेजयः पारीक्षितः पौरोहित्याय वव्रे । स नमस्कृत्य तमृषिमुवाच, 'भगवन्, अयं तव पुत्रो मम पुरोहितोऽस्तु' इति ।

स एवमुक्तः प्रत्युवाच जनमेजयम्, 'भो जनमेजय, पुत्रोऽयं मम महातपस्वी स्वाध्यायसम्पन्नः । समर्थोऽयं

---

[1] अदृष्टम्—अतर्कितम् ।

भवतः सर्वाः पापकृत्याः[1] शमयितुम् अन्तरेण महादेव-कृत्याम्। अस्य त्वेकमुपांशुव्रतम्[2]—यदेनं कश्चिद् ब्राह्मणः कश्चिदर्थमभियाचेत् तं तस्मै दद्यादयम्; यद्येतदुत्सहसे, ततो नयस्वैनम्' इति। तेनैवमुक्तो जनमेजयस्तं प्रत्युवाच, 'भगवन्, तत् तथा भविष्यति' इति। स तं पुरोहितमुपादायोपावृत्तो भ्रातॄनुवाच, 'मयायं वृत उपाध्यायः; यदयं ब्रूयात्, तत् कार्यमविचारयद्भिर्भवद्भिः' इति। तेनैवमुक्ता भ्रातरस्तस्य तथा चक्रुः।

स तथा भ्रातॄन् सन्दिश्य तक्षशिलां प्रत्यभिप्रतस्थे, तञ्च देशं वशे स्थापयामास।

---

# धौम्यशिष्याणां चरितानि

आसीत् कश्चिदृषिर्धौम्यो नाम आयोदः। तस्य शिष्यास्त्रयो बभूवुः—उपमन्युरारुणिर्वेदश्चेति। स एकं

---

[1] पापकृत्यां—शापरूपां बलायुःप्राणनिकृन्तनीं देवताम्, शमयेत्—अक्रोधनां कुर्य्यात्। (नी)

[2] उपांशुव्रतम्—निगूढनियमः।

शिष्यमारुणिं पाञ्चाल्यं प्रेषयामास, 'गच्छ, केदारखण्डं[1] बधान' इति।

स उपाध्यायेन सन्दिष्ट आरुणिः पाञ्चाल्यस्तत्र गत्वा तं केदारखण्डं बद्धुं नाशकत्। स क्लिश्यमानोऽपश्यदुपायम्, 'भवतु, एवं करिष्यामि' इति। स तत्र संविवेश केदारखण्डे। शयाने च तथा तस्मिंस्तदुदकं तस्थौ।

ततः कदाचिदुपाध्याय आयोदो धौम्यः शिष्यावपृच्छत्, 'क्व आरुणिः पाञ्चाल्यो गतः?' इति। तौ तं प्रत्यूचतुः, 'भगवतैव प्रेषितः, "गच्छ, केदारखण्डं बधान" इति।' स एवमुक्तस्तौ शिष्यौ प्रत्युवाच, 'तस्मात् तत्र सर्वे गच्छामो यत्र स गतः' इति। स तत्र गत्वा तस्याह्वानाय शब्दं चकार, 'भो आरुणे पाञ्चाल्य, क्वासि वत्स, एहि' इति।

स तच्छ्रुत्वा आरुणिरुपाध्यायवाक्यं तस्मात् केदारखण्डात् सहसोत्थाय तमुपाध्यायमुपतस्थे। प्रोवाच चैनम्, 'अयमस्म्यत्र केदारखण्डे निःसरमाणमुदकमवारणीयं संरोद्धुं संविष्टो भगवच्छब्दं श्रुत्वैव सहसा विदार्य्य केदारखण्डं भवन्तमुपस्थितः; तदभिवादये भगवन्तम्, आज्ञापयतु भवान् कमर्थं करवाणि' इति। स एवमुक्त उपाध्यायः प्रत्युवाच, 'यस्माद् भवान् केदारखण्डं

[1] 'केदारो' महाक्षेत्रान्तर्गतं चतुरस्रम्, तस्य 'खण्डः' जलनिरोधभित्तिः; 'आलि' इति भाषा। केदारे बहुजलप्रवेशेन बीजनाशो मा भूदिति भावः।

विदार्योत्थितस्तस्मादुद्दालक[1] एव नाम्ना भवान् भविष्यति ; यस्माच्च त्वया मद्वचनमनुष्ठितम्, तस्माच्छ्रेयोऽवाप्स्यसि, सर्वे च ते वेदाः प्रतिभास्यन्ति, सर्वाणि च धर्म्मशास्त्राणि' इति। स एवमुक्त उपाध्यायेनेष्टं देशं जगाम।

अथापरः शिष्यस्तस्यैवायोदस्य धौम्यस्योपमन्युर्नाम। तं चोपाध्यायः प्रेषयामास, 'वत्सोपमन्यो, गा रक्षस्व' इति। स उपाध्यायवचनादरक्षद् गाः।

स चाहनि गा रक्षित्वा दिवसक्षये गुरुगृहमागम्योपाध्यायस्याग्रतः स्थित्वा नमश्चक्रे। तमुपाध्यायः पीवानमपश्यत्,[2] उवाच चैनम्, 'वत्सोपमन्यो, केन वृत्तिं कल्पयसि? पीवानसि[3] दृढ़म्' इति। स उपाध्यायं प्रत्युवाच, 'भो भैक्षेण[4] वृत्तिं कल्पयामि' इति। तमुपाध्यायः प्रत्युवाच, 'ममानिवेद्य भैक्षं नोपयोक्तव्यम्' इति। स तथेत्युक्त्वा भैक्षं चरित्वोपाध्यायाय न्यवेदयत्; स तस्मादुपाध्यायः सर्वमेव भैक्षमगृह्णात्।

स तथेत्युक्त्वा पुनररक्षद् गाः। अहनि रक्षित्वा निशामुखे गुरुकुलमागम्य गुरोरग्रतः स्थित्वा नमश्चक्रे। तमुपा-

---

[1] उत् ऊर्ध्वं दारयतीति उद्दारकः, रलयोरभेदात् उद्दालक इति निरुक्तिः।

[2] पीवानम्—परिपुष्टदेहम्।

[3] पीवासीति वक्तव्ये पीवान् असीति प्रयोग आर्षः। उपदंष्ट्रेवम्।

[4] भिक्षाणां समूह इति भैक्षम्। "भिक्षादिभ्योऽण्" इति 'अण्'। निरैकार एव पाठः समीचीनः।

ध्यायस्तथापि पीवानमेव दृष्ट्वोवाच, 'वत्सोपमन्यो, सर्वमशेषतस्ते भैक्षं गृह्णामि, केनेदानीं वृत्तिं कल्पयसि?' इति। स एवमुक्त उपाध्यायं प्रत्युवाच, 'भगवते निवेद्य पूर्वम्, अपरं चरामि, तेन वृत्तिं कल्पयामि' इति। तमुपाध्यायः प्रत्युवाच, 'नैषा न्याय्या गुरुवृत्तिः; अन्येषामपि भैक्षोपजीविनां वृत्त्युपरोधं करोषि इत्येवं वर्त्तमानो लुब्धोऽसि' इति।

स तथेत्युक्त्वा गा अरक्षत्। रक्षित्वा च पुनरुपाध्यायगृहमागम्योपाध्यायस्याग्रतः स्थित्वा नमश्चक्रे। तमुपाध्यायस्तथापि पीवानमेव दृष्ट्वा पुनरुवाच, 'वत्सोपमन्यो, अहं ते सर्वं भैक्षं गृह्णामि, न चान्यच्चरसि, पीवानसि भृशम्; केन वृत्तिं कल्पयसि?' इति। स एवमुक्तस्तमुपाध्यायं प्रत्युवाच, "भो एतासां गवां पयसा वृत्तिं कल्पयामि' इति। तमुवाचोपाध्यायः, 'नैतन्न्याय्यम्, पय उपयोक्तुं भवतो मया नाभ्यनुज्ञातम्' इति।

स तथेति प्रतिज्ञाय गा रक्षित्वा पुनरुपाध्यायगृहमेत्य गुरोरग्रतः स्थित्वा नमश्चक्रे। तमुपाध्यायः पीवानमेव दृष्ट्वोवाच, 'वत्सोपमन्यो, भैक्षं नाश्नासि, न चान्यच्चरसि, पयो न पिबसि, पीवानसि भृशम्; केनेदानीं वृत्तिं कल्पयसि?' इति। स एवमुक्त उपाध्यायं प्रत्युवाच, 'भोः, फेनं पिबामि, यमिमे वत्सा मातॄणां स्तनं पिबन्त उद्गिरन्ति' इति। तमुपाध्यायः प्रत्युवाच, 'एते त्वदनु-

कम्पया गुणवन्तो वत्साः प्रभूततरं फेनमुद्गिरन्ति, तदेषामपि वत्सानां वृत्त्युपरोधं करोष्येवं वर्त्तमानः ; फेनमपि भवान् न पातुमर्हति' इति।

स तथेति प्रतिज्ञाय निराहारः पुनररक्षद् गाः। तथा प्रतिषिद्धो भैक्षं नाश्नाति, न चान्यच्चरति, पयो न पिबति, फेनं नोपयुङ्क्ते। स कदाचिदरण्ये क्षुधार्त्तोऽर्कपत्राण्यभक्षयत्। स तैरर्कपत्रैर्भक्षितैः क्षारतिक्तकटुरूक्षैस्तीक्ष्णविपाकै[1]श्चक्षुष्युपहतोऽन्धो बभूव। ततः सोऽन्धोऽपि चंक्रम्यमाणः कूपेऽपतत्।

अथ तस्मिन्नागच्छति, सूर्य्ये चास्ताचलावलम्बिनि, उपाध्यायः शिष्यम[2]वोचत्, 'मयोपमन्युः सर्वतः प्रतिषिद्धः; स नियतं कुपितः, ततो नागच्छति चिरगतश्च' इति। ततः 'अन्वेष्यः' इत्येवमुक्त्वा, शिष्येण सार्द्धमरण्यं गत्वा तस्याह्वानाय शब्दं चकार, 'भो उपमन्यो, क्वासि वत्स, एहि' इति। स उपाध्यायस्याह्वानवचनं श्रुत्वा प्रत्युवाचोच्चैः, 'अयमस्मिन् कूपे पतितोऽहम्' इति। तमुपाध्यायः प्रत्युवाच, 'कथं

---

[1] तीक्ष्णविपाकैः—पाककाले उदरे अग्निज्वालोत्पादकैः।

[2] बहुष्वादर्शेषु शिष्यान् इति बहुवचनान्तः पाठ उपलभ्यते। तस्य च 'तस्य शिष्यास्त्रयो बभूवुरुपमन्युरारुणिर्वेदश्चेति' इति पूर्व्वग्रन्थेन साकं विरोधः स्फुट एव। यदि स एव पाठः स्वीकर्त्तव्य इत्याग्रहस्तर्हीत्थं समाधेयम्—पूर्व्वोक्तं चित्वं 'प्राधान्येन व्यपदेशा भवन्ति' इति न्यायेन बोध्यम्, तेन शिष्यान्तरसद्भावेऽपि न क्षतिः। यद्वा, उपमन्योः समावर्त्तनात ऊर्द्ध्वमितरैरपि स्वीकृतं शिष्यत्वम् उपाध्यायस्य धौम्यस्य इति सर्व्वमवदातम्।

त्वमस्मिन् कूपे पतितः ?' इति। स उपाध्यायं प्रत्युवाच, 'अर्कपत्त्राणि भक्षयित्वान्धीभूतोऽस्मि, अतः कूपे पतितः' इति। तमुपाध्यायः प्रत्युवाच, 'अश्विनौ स्तुहि, तौ देवभिषजौ त्वां चक्षुष्मन्तं कर्त्तारौ' इति।

स एवमुक्त उपाध्यायेनोपमन्युः स्तोतुमुपचक्रमे देवावश्विनौ वाग्भिर्ऋग्भिः; तेनाभिष्टुतावश्विनावाजग्मतुः, आहतुश्चैनम्, 'प्रीतौ स्वः ; एष तेऽपूपः, अशानैनम्' इति। स एवमुक्तः प्रत्युवाच, 'नानृतमूचतुर्भगवन्तौ, न त्वहमेतमपूपमुपयोक्तुमुत्सहे गुरवेऽनिवेद्य' इति। ततस्तमश्विनावूचतुः, 'आवाभ्यां पुरस्ताद् भवत उपाध्यायेनैवमेवाभिष्टुताभ्याम् अपूपो दत्तः, उपयुक्तश्च स तेनानिवेद्य गुरवे ; त्वमपि तथैव कुरुष्व यथा कृतमुपाध्यायेन' इति। स एवमुक्तः प्रत्युवाच, 'एतत् प्रत्यनुनये भगवन्तावश्विनौ, नोत्सहेऽहमनिवेद्य गुरवेऽपूपमेनमुपयोक्तुम्' इति। तमश्विनावाहतुः, 'प्रीतौ स्वस्तवानया गुरुभक्त्या ; उपाध्यायस्य ते कार्ष्णायसा दन्ताः, भवतो हिरण्मया भविष्यन्ति, चक्षुष्मांश्च भविष्यसि, श्रेयश्चावाप्स्यसि' इति।

स एवमुक्तोऽश्विभ्यां लब्धचक्षुरुपाध्यायसकाशमागम्याभ्यवादयत्, आचचक्षे च। स चास्य प्रीतिमान् बभूव, आह चैनम्, 'यथाश्विनावाहतुस्तथा त्वं श्रेयोऽवाप्स्यसि, सर्वे च ते वेदाः प्रतिभास्यन्ति, सर्वाणि च धर्म्मशास्त्राणि' इति।

अथापरः शिष्यस्तस्यैवायोदस्य धौम्यस्य वेदो नाम। तमुपाध्यायः समादिदेश, 'वत्स वेद, इहास्यतां तावन्मम गृहे कञ्चित् कालम्, शुश्रूषुणा च भवितव्यम्, श्रेयस्ते भविष्यति' इति। स तथेत्युक्त्वा गुरुकुले दीर्घकालं गुरुशुश्रूषणपरोऽवसत्, गौरिव नित्यं गुरुषु धूर्षु नियोज्यमानः शीतोष्णक्षुत्तृष्णादुःखसहः सर्वत्राप्रतिकूलः। तस्य महता कालेन गुरुः परितोषं जगाम, तत्परितोषाच्च श्रेयः सर्वज्ञताञ्चावाप।

स उपाध्यायेनानुज्ञातः समावृत्तस्तस्माद् गुरुकुल-वासाद् गृहस्थाश्रमं प्रत्यपद्यत। तस्यापि स्वगृहे वसत-स्त्रयः शिष्या बभूवुः। स शिष्यान् न किञ्चिदुवाच—कर्म्म वा क्रियतां गुरुशुश्रूषा वेति। दुःखाभिज्ञो हि गुरुकुलवासस्य शिष्यान् परिक्लेशेन योजयितुं नैयेष।

अथ कस्मिंश्चित् काले वेदं ब्राह्मणं जनमेजयः पौष्यश्च क्षत्रियावुपेत्योपाध्यायं वरयाञ्चक्रतुः। स कदाचिद् याज्यकार्य्येणाभिप्रस्थित उत्तङ्कनामानं शिष्यं नियोजयामास, 'भो यत् किञ्चिदस्मद्गृहे परिहीयते, तदिच्छाम्यहम-परिहीयमाणं भवता क्रियमाणम्' इति। स एवं प्रतिसन्दिश्योत्तङ्कं वेदः प्रवासं जगाम। अथोत्तङ्कः शुश्रूषुर्गुरुनियोगमनुतिष्ठमानो गुरुकुले वसति स्म।

तस्य पुनरुपाध्यायः कालान्तरेण गृहमाजगाम तस्मात् प्रवासात्। [स तस्य शिष्यस्य गुरुभक्त्या, धैर्य्येण,

कर्त्तव्यनिष्ठया च प्रीतिमानभूत् ;] उवाच चैनम्, 'वत्सोत्तङ्क, किं ते प्रियं करवाणि? धर्म्मतो हि शुश्रूषितोऽस्मि भवता, तेन प्रीतिः परस्परेण नौ संवृद्धा ; तदनुजाने भवन्तम्, सर्वानेव कामानवाप्स्यसि, गम्यताम्' इति। स एवमुक्तः प्रत्युवाच, 'किं ते प्रियं करवाणि? सोऽहमनुज्ञातो भवता इच्छामीष्टं गुर्वर्थमुपाहर्तुम्' इति। तेनैवमुक्त उपाध्यायः प्रत्युवाच, 'वत्सोत्तङ्क, उष्यतां तावत्' इति।

स कदाचिदुपाध्यायमाहोत्तङ्कः, 'आज्ञापयतु भवान् किं ते प्रियमुपाहरामि गुर्वर्थम्' इति। तमुपाध्यायः प्रत्युवाच, 'वत्सोत्तङ्क, बहुशो मां नोदयसि, "गुर्वर्थमुपाहरामि" इति ; तद् गच्छैनां प्रविश्योपाध्यायानीं पृच्छ "किमुपाहरामि?" इति, एषा यद् ब्रवीति तदुपाहरस्व' इति।

स एवमुक्त उपाध्यायेनोपाध्यायानीमपृच्छत्, 'भगवति, उपाध्यायेनास्म्यनुज्ञातो गृहं गन्तुम्, तदिच्छामीष्टं ते गुर्वर्थमुपाहृत्यानृणो गन्तुम् ; तदाज्ञापयतु भवती किमुपाहरामि गुर्वर्थम्' इति। सैवमुक्तोपाध्यायानी तमुत्तङ्कं प्रत्युवाच, 'गच्छ पौष्यं राजानम्, भिक्षस्व तस्य क्षत्रियया पिनद्धे[1] कुण्डले, ते आनयस्व ; इतश्चतुर्थेऽहनि पुण्यकं[2]

---

[1] पिनद्धे—अपिनद्धे परिहिते इत्यर्थः। 'वष्टि भागुरिरल्लोपमवाप्योरुपसर्गयोः'।

[2] पुण्यकम्—व्रतविशेषोत्सवः।

भविता, ताभ्यां पिनद्धाभ्यां शोभमाना ब्राह्मणान् परिवेष्टु-मिच्छामि। तत् सम्पादयस्व ; एवं हि कुर्वतः श्रेयो भविता, अन्यथा कुतः श्रेयः ?' इति।

स एवमुक्तस्तया प्रातिष्ठतोत्तङ्कः। स पथि गच्छन्न-पश्यदृषभमतिप्रमाणम्, तमधिरूढञ्च पुरुषमतिप्रमाण-मेव। स पुरुष उत्तङ्कमभ्यभाषत, 'भो उत्तङ्क, एतत् पुरीषमस्य ऋषभस्य भक्षयस्व' इति। स एवमुक्तो नैच्छत्। तमाह पुरुषो भूयः, 'भक्षयस्वोत्तङ्क, मा विचारय, उपाध्यायेनापि ते भक्षितं पूर्व्वम्' इति। स एवमुक्तो 'वाढम्' इत्युक्त्वा, तदा तदृषभस्य मूत्रं पुरीषञ्च भक्षयित्वा सम्भ्रमाद् उत्थित एवाप उपस्पृश्य प्रतस्थे यत्र स क्षत्रियः पौष्यः ; तमुपेत्यासीनमपश्यदुत्तङ्कः।

स उत्तङ्कस्तमुपेत्य आशीर्भिरभिनन्द्योवाच, 'अर्थी भवन्तमुपागतोऽस्मि' इति। स एनमभिवाद्योवाच, 'भगवन्, पौष्यः खल्वहं किं करवाणि ?' इति। स तमुवाच, 'गुर्वर्थं कुण्डलाभ्यामर्थ्यागतोऽस्मि, ये व ते क्षत्रियया पिनद्धे कुण्डले ते भवान् दातुमर्हति' इति। तं प्रत्युवाच पौष्यः, 'प्रविश्यान्तःपुरं क्षत्रिया याच्यताम्' इति। स तेनैवमुक्तः प्रविश्यान्तःपुरं क्षत्रियां नापश्यत्। स पौष्यं पुनरुवाच, 'न युक्तं भवताहमनृतेनोपचरितुम् ; न हि तेऽन्तःपुरे क्षत्रिया सन्निहिता, नैनां पश्यामि' इति।

स एवमुक्तः पौष्यः क्षणमात्रं विमृश्योत्तङ्कं प्रत्युवाच, 'नियतं भवान् उच्छिष्टः, स्मर तावत्, न हि सा क्षत्रिया उच्छिष्टेनाशुचिना शक्या द्रष्टुम्, पतिव्रतात्वात् सैषा नाशुचेर्दर्शनमुपैति' इति। अथैवमुक्त उत्तङ्कः स्मृत्वोवाच, 'अस्ति खलु; मया उत्थितेनोपस्पृष्टं गच्छता च' इति। तं पौष्यः प्रत्युवाच, 'एष ते व्यतिक्रमः, नोत्थितेनोपस्पृष्टं भवति, शीघ्रं गच्छता च' इति।

अथोत्तङ्कस्तं तथेत्युक्त्वा प्राङ्मुख उपविश्य, सुप्रक्षालितपाणिपादवदनो निःशब्दाभिरफेनाभिरनुष्णाभिर्हृद्गताभिरद्भिस्त्रिः पीत्वा, द्विः परिमृज्य, खान्यद्भिरुपस्पृश्य[1] चान्तःपुरं प्रविवेश; ततस्तां क्षत्रियामपश्यत्। सा च दृष्ट्वैवोत्तङ्कं प्रत्युत्थायाभिवाद्य चोवाच, 'स्वागतं ते भगवन्, आज्ञापय किं करवाणि' इति। स तामुवाच, 'एते कुण्डले गुर्वर्थं मे भिक्षिते दातुमर्हसि' इति। सा प्रीता तेन तस्य सद्भावेन, 'पात्रमयमनतिक्रमणीयश्च' इति मत्वा, ते कुण्डले अवमुच्यास्मै प्रायच्छत्; आह चैनम्, 'एते कुण्डले तक्षको नागराजः सुभृशं प्रार्थयति, अप्रमत्तो

---

[1] 'अनुष्णाभिरफेनाभिरद्भिस्तीर्थेन धर्मवित्।
शौचेप्सुः सर्वदाचामेदेकान्ते प्रागुदङ्मुखः॥
त्रिराचामेदपः पूर्वं द्विः प्रमृज्यात्ततो मुखम्।
खानि चैव स्पृशेदद्भिरात्मानं शिर एव च॥
हृद्गाभिः पूयते विप्रः' इत्यादि-मनुस्मरणात्।

नेतुमर्हसि' इति। स एवमुक्तस्तां क्षत्रियां प्रत्युवाच, 'भवती सुनिर्वृता भवतु, न मां शक्तस्तक्षको नागराजो धर्षयितुम्' इति।

स एवमुक्त्वा, तां क्षत्रियामामन्त्र्य पौष्यसकाश-मागच्छत्। आह चैनम्, 'भोः पौष्य, प्रीतोऽस्मि' इति। तमुत्तङ्कं पौष्यः प्रत्युवाच, 'भगवन्, चिरेण पात्रमासाद्यते, भवांश्च गुणवानतिथिः, तदिच्छे श्राद्धं कर्त्तुम्, क्रियतां क्षणः' इति। तमुत्तङ्कः प्रत्युवाच, 'कृतक्षण एवास्मि; शीघ्रमिच्छामि यथोपपन्नमन्नमुपस्कृतं भवता' इति। स तथेत्युक्त्वा यथोपपन्नेनान्नेनैनं भोजयामास।

अथोत्तङ्कः सकेशं शीतमन्नं दृष्ट्वा 'अशुच्येतत्' इति मत्वा पौष्यमुवाच, 'यस्मान्मे अशुच्यन्नं ददासि, तस्मादन्धो भविष्यसि' इति। पौष्यः प्रत्युवाच, 'यस्मात् त्वमप्यदुष्टमन्नं दूषयसि, तस्मादनपत्यो भविष्यसि' इति। तमुत्तङ्कः प्रत्युवाच, 'न युक्तं भवतान्नमशुचि दत्त्वा प्रतिशापं दातुम्, तस्मादन्नमेव प्रत्यक्षीकुरु' इति। ततः पौष्यस्तस्याशुचिभावमन्नस्यापरोक्षयामास[1]।

अथ तदन्नं मुक्तकेश्या स्त्रियोपाहृतमनुष्णं सकेशं च 'अशुचि एतत्' इति मत्वा तमृषिमुत्तङ्कं प्रसादयामास, 'भगवन्, एतदज्ञानादन्नं सकेशमुपाहृतं शीतञ्च, तत् क्षामये भगवन्तम्, न भवेयमन्धः' इति। तमुत्तङ्कः

[1] अपरोक्षयामास—प्रत्यक्षीकृतवान्।

प्रत्युवाच, 'न मृषा ब्रवीमि, भूत्वा त्वमन्धो नचिरादनन्धो भविष्यसि, ममापि शापो न भवेद् भवता दत्तः' इति। तं पौष्यः प्रत्युवाच, 'न चाहं शक्तः शापं प्रत्यादातुम्; न हि मे मन्युरद्याप्युपशमं गच्छति। किञ्चैतद् भवता न ज्ञायते? यथा—

> नवनीतं हृदयं ब्राह्मणस्य
> वाचि क्षुरो निशितस्तीक्ष्णधारः।
> तदुभयमेतद् विपरीतं क्षत्रियस्य
> वाङ् नवनीतं हृदयं तीक्ष्णधारम्॥

इति। तदेवं गते न शक्तोऽहं तीक्ष्णहृदयत्वात् तं शापमन्यथाकर्त्तुम्। गम्यताम्' इति।

तमुत्तङ्कः प्रत्युवाच, 'भवताहमन्नस्याशुचिभावमाकलय्य प्रत्यनुनीतः; प्राक् च तेऽभिहितम्, "यस्माददुष्टमन्नं दूषयसि, तस्मादनपत्यो भविष्यसि" इति, दुष्टे चान्ने नैष मम शापो भविष्यति; साधयामस्तावत्'[1] इत्युक्त्वा प्रातिष्ठतोत्तङ्कस्ते कुण्डले गृहीत्वा। सोऽपश्यदथ पथि नग्नं क्षपणकमागच्छन्तं मुहुर्मुहुर्दृश्यमानमदृश्यमानञ्च।

अथोत्तङ्कस्ते कुण्डले सन्न्यस्य भूमावुदकार्थं प्रचक्रमे। एतस्मिन्नन्तरे स क्षपणकस्त्वरमाण उपसृत्य ते कुण्डले गृहीत्वा प्राद्रवत्। तमुत्तङ्कोऽभिसृत्य कृतोदककार्य्यः, शुचिः, प्रयतः, नमो देवेभ्यो गुरुभ्यश्च कृत्वा, महता

[1] साधयामः—गच्छामः।

जवेन तमन्वयात्। तस्य तक्षको दृढमासन्नः, स तं जग्राह। गृहीतमात्रः स तद्रूपं विहाय, तक्षकरूपं कृत्वा सहसा धरण्यां विवृतं महाबिलं प्रविवेश; प्रविश्य च नागलोकं स्वभवनमगच्छत्।

अथोत्तङ्कस्तस्याः क्षत्रियाया वचः स्मृत्वा तं तक्षकमन्वगच्छत्। स तद् बिलं दण्डकाष्ठेन चखान, न चाशकत्। तं क्लिश्यमानमिन्द्रोऽपश्यत्, स वज्रं प्रेषयामास, 'गच्छास्य ब्राह्मणस्य साहाय्यं कुरुष्व' इति। अथ वज्रं दण्डकाष्ठमनुप्रविश्य तद्बिलमदारयत्, तमुत्तङ्कोऽनुविवेश। तेनैव बिलेन प्रविश्य तं नागलोकम् अपर्य्यन्तम्, नैकविध-प्रासाद-हर्म्म्य-वलभी-निर्य्यूहशतसङ्कुलम्,[1] उच्चावचक्रीडाश्चर्य्यस्थानावकीर्णमपश्यत्। स तत्र नागांस्तानस्तुवत्; स्तुवन्नपि नागान् यदा ते कुण्डले नालभत, तदापश्यत् पुरुषमश्वं च दर्शनीयम्। स तं तुष्टाव; ततः स एनं पुरुषः प्राह, 'प्रीतोऽस्मि तेऽहम्; किं ते प्रियं करवाणि?' इति। स तमुवाच, 'नागा मे वशमेयुः' इति।

---

[1] "हर्म्म्यादि धनिनां वासः, प्रासादो देवभूभुजाम्।" इत्यमरः। वलभी उपरिकुटी (चिलेर कोठेर घर इति भाषा)। निर्य्यूहो नागदन्तकः। "निर्य्यूहः शेखरे द्वारे निर्यासे नागदन्तके" इति विश्वः।

ततोऽश्वात् सर्वस्रोतोभ्यः पावकार्चिषः सधूमाः सर्वतो निष्पेतुः। अथोपधूपिते ताभिर्नागलोके, सम्भ्रान्तस्तक्षकोऽग्नेस्तेजोभयाद् विषण्णः कुण्डले गृहीत्वा सहसा स्वभवनान्निष्क्रम्योत्तङ्कमुवाच, 'इमे कुण्डले गृह्णातु भवान्' इति। स ते प्रतिजग्राहोत्तङ्कः; प्रतिगृह्य च कुण्डले अचिन्तयत्, 'अद्य तत् पुण्यकमुपाध्यायान्याः, दूरञ्चाहमभ्यागतः, कथं खलु सम्भावयेयम्'[1] इति। तत एनं चिन्तयानमेव स पुरुष उवाच, 'उत्तङ्क, इममेवाश्वमधिरोह, एष त्वां क्षणेनैवोपाध्यायकुलं प्रापयिष्यति' इति। स तथेत्युक्त्वा तमश्वमधिरुह्य प्रत्याजगामोपाध्यायकुलम्। उपाध्यायानी च स्नाता केशानावापयन्त्य[2]पविष्टोत्तङ्को नागच्छतीति शापायास्य मनो दधे।

अथैतस्मिन्नन्तरे स उत्तङ्कः प्रविश्य उपाध्यायकुलम् उपाध्यायानीमभ्यवादयत्, ते चास्यै कुण्डले प्रायच्छत्। सा चैनं प्रत्युवाच, 'उत्तङ्क, देशे कालेऽभ्यागतोऽसि, स्वागतं ते वत्स, श्रेयस्तवोपस्थितम्; सिद्धिं प्राप्नुहि' इति।

---

[1] सम्भावयेयम्—प्रभवेयं पूरयितुमभिलषितमुपाध्यायान्याः इत्यर्थः।

[2] आवापयन्ती—दन्तपत्रिकया वेणीरूपेण सङ्ग्रथनं केशानां कारयन्ती। (नी)।

## अष्टकादेः शिवेश्च दानधर्म्मः

अष्टकस्य वैश्वामित्रेरश्वमेधे सर्वे राजानः प्रागच्छन्; भ्रातरश्चास्य प्रतर्द्दनो वसुमनाः शिविरौशीनर इति। स च समाप्तयज्ञो भ्रातृभिः सह रथेन प्रायात्। ते च नारदमागच्छन्तमभिवाद्य 'आरोहतु भवान् रथम्' इत्यब्रुवन्; तान् 'तथा' इत्युक्त्वा रथमारुरोह।

अथ तेषामेकः सुरर्षिं नारदमब्रवीत्, 'प्रसाद्य भगवन्तं किञ्चिदिच्छेयं प्रष्टुम्' इति; 'पृच्छ' इत्यब्रवीदृषिः। सोऽब्रवीत्, 'आयुष्मन्तः सर्वगुणसमुदिताः। अथायुष्मन्तं[1] स्वर्गस्थानं चतुर्भिर्यातव्यं स्यात्, कश्चावतरेत्?' 'अयमष्टकोऽवतरेत्' इत्यब्रवीदृषिः। 'किं कारणम्?' इत्यपृच्छत्। अथाचष्ट 'अष्टकस्य गृहे मयोषितम्, स मां रथेनानुप्रावहत्। अथापश्यमनेकानि गोसहस्राणि वर्णशो विविक्तानि। तमहमपृच्छम्, "कस्येमा गावः?" इति; सोऽब्रवीत्, "मया निसृष्टा[2] एताः" इति; तेनैव स्वयं श्लाघति कथितेन, एषोऽवतरेत्' इति।

'अथ त्रिभिर्यातव्यम्, साम्प्रतं कोऽवतरेत्?' 'प्रतर्द्दनः' इत्यब्रवीदृषिः। 'तत्र किं कारणम्?' 'प्रतर्द्दनस्यापि

---

[1] आयुष्मन्तम्—चिरकालभोग्यम्। पुंस्त्वमार्षम्।

[2] निसृष्टाः—दत्ताः।

गृहे मयोषितम्, स मां रथेनानुप्रावहत्। अथैनं ब्राह्मणोऽभिच्छत, "अश्वं मे ददातु भवान्" इति; "निवृत्तो दास्यामि" इत्यब्रवीद् ब्राह्मणम्। "त्वरितमेव दीयताम्" इत्यब्रवीद् ब्राह्मणः; "त्वरितमेव" स ब्राह्मणस्यैवमुक्त्वा दक्षिणं पार्श्वमददत्। अथान्योऽप्यश्वार्थी ब्राह्मण आगच्छत्, तथैव चैनमुक्त्वा वामपार्ष्णिमभ्यदात्; अथ प्रायात्। पुनरपि चान्योऽप्यश्वार्थी ब्राह्मण आगच्छत्, त्वरितोऽथ तस्मै अपनह्य[1] वामं धुर्य्यमददत्; अथ प्रायात्। पुनरन्य आगच्छदश्वार्थी ब्राह्मणः; तमब्रवीत्, "अतियातो[2] दास्यामि" इति। "त्वरितमेव मे दीयताम्" इत्यब्रवीद् ब्राह्मणः; तस्मै दत्त्वाश्वं रथधुरं गृह्णता[3] व्याहृतम्, "ब्राह्मणानां साम्प्रतं[4] नास्ति किञ्चित्" इति। य एष ददाति चासूयति च, तेन व्याहृतेन तथावतरेत्' इति।

'अथ द्वाभ्यां यातव्यमिति, कोऽवतरेत्?' 'वसुमना अवतरेत्' इत्यब्रवीदृषिः। 'किं कारणम्?' इत्यपृच्छत्। अथाचष्ट नारदः, 'अहं परिभ्रमन् वसुमनसो गृहमुपस्थितः;

---

[1] अपनह्य—रथादुन्मुच्य। वामम्—वामपार्श्वस्थम्। धुर्य्यम्—अश्वम्।

[2] अतियातः—पन्थानमतिक्रम्य गन्तव्यं स्थानं प्राप्तः सन्।

[3] अश्वचतुष्टयस्यापि दानाद् धुरं स्वहस्तेनैव गृह्णता।

[4] युक्तायुक्तविचार इत्यर्थः।

स्वस्तिवाचन[1]मासीत्। पुष्परथस्य[2] प्रयोजनेन तमहम-
न्वगच्छम्। स्वस्ति वाचितेषु ब्राह्मणेषु, रथो ब्राह्मणानां
दर्शितः; तमहं रथं प्राशंसम्। अथ राजाब्रवीत्,
"भगवता रथः प्रशस्तः, एष भगवतो रथः" इति।
अथ कदाचित् पुनरप्यहमुपस्थितः; पुनरेव रथप्रयोजन-
मासीत्। "सम्यक्, अयमेष भगवतः" इत्येवं राजाब्रवीत्।
पुनरेव च तृतीयं स्वस्तिवाचनं समभावयम्। अथ
राजा ब्राह्मणानां दर्शयन् मामभिप्रेक्ष्याब्रवीत्, "अथो
भगवता पुष्परथस्य स्वस्तिवाचनानि सुष्ठु सम्भावितानि[3] ?[4]"
इति। एतेन द्रोहवचनेना[5]वतरेत्' इति।

---

[1] स्वस्तिवाचनम्—स्वस्ति इति शब्दस्य यजमानप्रार्थितैर्ब्राह्मणैरुच्चारणम्। मङ्गलकर्मारम्भे वक्ष्यमाणमन्त्रोच्चारणपूर्व्वकं तण्डुलविक्षेपणमिति यावत्। अमुककर्म्मणि पुण्याहं भवन्तो ब्रुवन्तु इति यजमानेनोक्ते पुण्याहमिति ब्राह्मणैस्त्रिरुक्ते, अमुककर्म्मणि ऋद्धिं भवन्तो ब्रुवन्तु इति यजमानेन प्रार्थिता ऋध्यतामिति ब्राह्मणास्त्रिर्ब्रूयुः। एवं स्वस्ति भवन्तो ब्रुवन्तु इत्युक्ते स्वस्ति इति ब्राह्मणास्त्रिर्ब्रूयुः। ततः

स्वस्ति न इन्द्रो वृद्धश्रवाः स्वस्ति नः पूषा विश्ववेदाः।
स्वस्ति नस्तार्क्ष्यो अरिष्टनेमिः स्वस्ति नो बृहस्पतिर्दधातु॥

इति पठित्वा तण्डुलान् विकिरेत्।

[2] पुष्परथस्य—गिरिकाननसागरादिषु सर्व्वत्रैव अप्रतिहतगते रथस्य।

[3] सम्भावितानि—सम्पादितानि।

[4] नीलकण्ठमतेऽत्र काकुर्नास्ति। "रथः स्तुत एव न तु याचितः। राजापि ममाशयं बुद्ध्वापि रथं न दत्तवान् रथस्तुतिं चानुमोदितवान् इति प्रघट्टकार्थः। 'द्रोहवचनेन' अदत्त्वा तथा स्तवेन" इति हि तेन व्याख्यातम्। परमीदृशेषु स्थलेषु 'अथो'-शब्दस्य प्रश्नपरत्वमेव समीचीनतया प्रतिभाति।

[5] सोल्लुण्ठवचनेन।

'अथैकेन यातव्यं स्यात्, कोऽवतरेत्?' पुनर्नारद आह, 'शिबिर्यायात्, अहमवतरेयम्।' 'अत्र किं कारणम्?' इत्यब्रवीदसौ। 'अहं शिबिना न समानोऽस्मि; यतस्तं शिबिं ब्राह्मणोऽभ्यागच्छत्, स चेनमब्रवीत्, "शिबे, अन्नार्थ्यस्मि" इति। तमब्रवीच्छिबिः, "किं क्रियताम्? आज्ञापयतु भवान्" इति।

'अथैनं ब्राह्मणोऽब्रवीत्, "य एष ते पुत्रो बृहद्गर्भो नाम, एष प्रमातव्यः[1], तमेनं संस्कुरु, अन्नञ्चोपपादय, ततोऽहं प्रतीक्ष्यः" इति।

'ततः पुत्रं प्रमाप्य, संस्कृत्य, विधिना साधयित्वा, पात्र्यामर्पयित्वा, शिरसा प्रतिगृह्य, ब्राह्मणममृगयत्। अथास्य मृगयमाणस्य कश्चिदाचष्ट, "एष ते ब्राह्मणो नगरं प्रविश्य दहति ते गृहम्, कोशागारम्, आयुधागारम्, अश्वशालाम्, हस्तिशालां च क्रुद्धः" इति। अथ शिबिस्तथैवाविकृतमुखवर्णो नगरं प्रविश्य, ब्राह्मणं तमब्रवीत्, "सिद्धं भगवन्नन्नम्" इति। ब्राह्मणो न किञ्चिद् व्याजहार, विस्मयादधोमुखश्चासीत्। ततः प्रासादयद् ब्राह्मणम्, "भगवन्, भुज्यताम्" इति। मुहूर्त्तादुद्वीक्ष्य शिबिमब्रवीत्, "त्वमेवैतदशान" इति। तत्राह तथेति शिबिः। तथैवाविमना महित्वा कपालम् अभ्युद्धार्य्यं च भोक्तुमैच्छत्।

[1] प्रमातव्यः—हन्तव्यः।

'अथास्य ब्राह्मणो हस्तमगृह्णात्, अब्रवीच्चैनम्, "जितक्रोधोऽसि, न ते किञ्चिदपरित्याज्यं ब्राह्मणार्थं" इति। ब्राह्मणोऽपि तं महाभागं सभाजयत्[1]। स ह्युदीक्षमाणः पुत्रमपश्यदग्रे तिष्ठन्तं देवकुमारमिव पुण्यगन्धान्वितमलङ्कृतम्। सर्वं च तमर्थं विधाय ब्राह्मणोऽन्तरधीयत। तस्य राजर्षेर्विधाता तेनैव वेषेण परीक्षार्थमागत इति।

'तस्मिन्नन्तर्हिते अमात्या राजानमूचुः, "किं प्रेप्सुना भवतेदमेवं जानता कृतम्?" इति। शिविरुवाच—

"नैवाहमेतद् यशसे ददानि
न चार्थहेतोर्न च भोगतृष्णया।
पापैरनासेवित एष मार्ग
इत्येवमेतत् सकलं करोमि॥"

इति।'

---

[1] सभाजयत्—पूजयामास। अदन्त-चुरादि-सभाजधातोर्लङि रूपम्। अडभावश्चार्षः।

## परीक्षिच्चरितम्

'भूय एव ब्राह्मणमाहात्म्यं वक्तुमर्हसि' इत्यब्रवीत् पाण्डवेयो मार्कण्डेयम्। अथाचष्ट मार्कण्डेयः, 'अपूर्वमिदं श्रूयतां ब्राह्मणानां चरितम्—

'अयोध्यायामिक्ष्वाकुकुलोद्वहः पार्थिवः परीक्षिन्नाम मृगयामगमत्; तमेकमश्वेन मृगमनुसरन्तं मृगो दूरमपाहरत्। अथाध्वनि जातश्रमः क्षुत्तृष्णाभिभूतश्चैकस्मिन् देशे नीलं गहनं वनखण्डमपश्यत्, तच्च विवेश। ततस्तस्य वनखण्डस्य मध्येऽतीव रमणीयं सरो दृष्ट्वा साश्व एव व्यगाहत। अथाश्वस्तः स बिसमृणालमश्वायाग्रतो निक्षिप्य पुष्करिणीतीरे संविवेश। ततः शयानो मधुरं गीतमशृणोत्। स श्रुत्वाचिन्तयत्, "नेह मनुष्यगतिं पश्यामि, कस्य खल्वयं गीतशब्दः ?" इति। अथापश्यत् कन्यां परमरूपदर्शनीयां पुष्पाण्यवचिन्वतीं गायन्तीञ्च।

'अथ सा राज्ञः समीपे पर्य्यक्रामत्। तामब्रवीद् राजा, "कस्यासि भद्रे, का वा त्वम् ?" इति। सा प्रत्युवाच, "कन्यास्मि" इति। तां राजोवाच, "अर्थी त्वयाहम्" इति। अथोवाच कन्या, "समयेनाहं शक्या त्वया लब्धुं नान्यथा" इति। राजा तां समयमपृच्छत्। कन्योवाच,

"नोदकं मे दर्शयितव्यम्" इति। स राजा "बाढम्" इत्युक्त्वा तामुपयेमे। कृतोद्वाहश्च राजा परीक्षित् तया सह तत्र तस्थौ।

'ततस्तत्रैवासीने राजनि सेनान्वगच्छत्। सा सेनोपविष्टं राजानं परिवार्य्यातिष्ठत्। अथ पर्य्याश्वस्तश्च राजा तयैव सह शिबिकया प्रायादविषादः[1]। स स्वं नगरमनुप्राप्य रहसि तया सहास्ते ; तत्राभ्यासस्थोऽपि कश्चित्तं नापश्यत्। अथ प्रधानामात्योऽभ्यासचरास्तस्य स्त्रियोऽपृच्छत्, "किमत्र प्रयोजनं वर्त्तते" इति। अथाब्रुवंस्ताः स्त्रियः, "अपूर्वमिव पश्यामः ; उदकं नात्र नीयते" इति।

'अथामात्योऽनुदकं वनं कारयित्वोदारवृक्षं बहुपुष्पफलमूलम्, तस्य मध्ये मुक्ताजालमयीं पार्श्वे वापीं सुगूढां सुधोपलिप्तां च, रहस्युपगम्य राजानमब्रवीत्, "वनमिदमुदारमनुदकम्, साध्वत्र सहैतया गम्यताम्" इति। स तस्य वचनात् तयैव सह देव्या तद्वनं प्राविशत्। स कदाचित् तस्मिन् कानने रम्ये तयव सह व्यवाहरत्। अथ क्षुत्तृष्णार्द्दितः श्रान्तोऽतिमुक्तकागार[2]मपश्यत्। तत् प्रविश्य राजा सह प्रियया सुधाकृतां विमलां सलिलपूर्णां

---

[1] अविषादः—परिश्रमभयजनित-विषादरहितः।

[2] अतिमुक्तकागारम्—माधवीलताकुञ्जम्।

वापीमपश्यत्; दृष्ट्वैव च ताम्, तस्याश्च तीरे सहैव तया देव्यावातिष्ठत।

'अथ तां देवीं स राजाब्रवीत्, "साध्ववतर वापीसलिलम्" इति। सा तद्वचः श्रुत्वावतीर्य वापीं न्यमज्जत्; न पुनरुदमज्जत्।

'तां स मृगयमाणो राजा नापश्यत्। अथ वापीं निःस्राव्य, मण्डूकं श्वभ्रमुखे[1] दृष्ट्वा, क्रुद्ध आज्ञापयामास स राजा, "सर्वत्र मण्डूकवधः क्रियताम्। यो मयार्थी, स मां मृतमण्डूकोपायनमादायोपतिष्ठेत्" इति।

'अथ मण्डूकवधे घोरे क्रियमाणे दिक्षु सर्वासु मण्डूकान् भयमाविवेश। ते भीता मण्डूकराज्ञे यथावृत्तं न्यवेदयन्। ततो मण्डूकराट् तापसवेषधारी राजानमभ्यगच्छत्; उपेत्य चैनमुवाच, "मा राजन् क्रोधवशं गमः; प्रसादं कुरु; नार्हसि मण्डूकानामनपराधिनां वधं कर्त्तुम्" इति।

'तमेवंवादिनमिष्टजनशोकपरीतात्मा राजोवाच, "न हि क्षम्यते तन्मया, हनिष्याम्येतान्; एतैर्दुरात्मभिः प्रिया मे भक्षिता, सर्वथैव मे वध्या मण्डूकाः। नार्हसि विद्वन् मामुपरोद्धुम्" इति।

'स तद्वाक्यमुपलभ्य व्यथितेन्द्रियमनाः प्रोवाच, "प्रसीद

---

[1] श्वभ्रमुखे—भूगर्त्तमुखे। 'गर्त्तावटौ भुवि श्वभ्रे सरन्ध्रे सुषिरं विषु' इत्यमरः।

राजन्, अहमायुर्नाम मण्डूकराजः; मम सा दुहिता सुशोभना नाम, तस्या हि दौःशील्यमेतत्; बहवस्तया राजानो विप्रलब्धपूर्वाः" इति। तमब्रवीद्राजा, "तया-स्म्यर्थी, सा मे दीयताम्" इति।

'अथैनां राज्ञे पितादात्, अब्रवीच्चैनाम्, "एनं राजानं शुश्रूषस्व" इति। स एवमुक्त्वा, दुहितरं क्रुद्धः शशाप—

"यस्मात् त्वया राजानो विप्रलब्धा बहवः, तस्माद-ब्रह्मण्यानि तवापत्यानि भविष्यन्ति, आनृतिकत्वात् तव" इति।

'स च राजा तामुपलभ्य, हर्षेण बाष्पकलया वाचा प्रणिपत्याभिपूज्य मण्डूकराजमब्रवीत्, "अनुगृहीतोऽस्मि" इति। स च मण्डूकराजो दुहितरमनुज्ञाप्य यथा-गतमगच्छत्।

'अथ कस्यचित् कालस्य तस्यां कुमारास्त्रयस्तस्य राज्ञः सम्बभूवुः—शलो दलो बलश्चेति। ततस्तेषां ज्येष्ठं शलं समये पिता राज्येऽभिषिच्य तपसि धृतात्मा वनं जगाम। अथ कदाचिच्छलो मृगयामनुचरन् मृगमासाद्य रथेनान्व-धावत्, सूतञ्चोवाच, "शीघ्रं मां वाहयस्व" इति। स तथोक्तः सूतो राजानमब्रवीत्, "न क्रियतामनुबन्धः; नैष शक्यस्त्वया मृगोऽयं ग्रहीतुम्, यद्यपि ते रथे युक्तौ वाम्यौ[1] स्याताम्" इति। ततोऽब्रवीद्राजा सूतम्,

[1] वाम्यौ—वामदेवीयौ अश्वतरौ। (नी)

"आचक्ष्व मे वाम्यौ, हन्मि वा त्वाम्" इति। स एवमुक्तो राजभयभीतः सूतो वामदेवशापभीतश्च सन् नाचख्यौ राज्ञे। ततः पुनः स राजा खड्गमुद्यम्य "शीघ्रं कथयस्व" इति तमाह, "हनिष्ये त्वाम्" इति।

'स तदाह राजभयभीतः सूतः, "वामदेवस्याश्वौ वाम्यौ मनोजवौ"[1] इति। अथैनमेवं ब्रुवाणमब्रवीद्राजा, "वामदेवाश्रमं प्रयाहि" इति।

'स गत्वा वामदेवाश्रमं तमृषिमब्रवीत्, "भगवन्, मृगो मे विद्धः पलायते; तं सम्भावयितुमर्हसि वाम्यौ दातुम्" इति। तमब्रवीदृषिः, "ददानि ते वाम्यौ, कृतकार्य्येण भवता ममैव वाम्यौ निर्यातयितव्यौ[2] क्षिप्रम्" इति।

'स च तावश्वौ प्रतिगृह्यानुज्ञाप्य ऋषिम्, प्रायाद् वाजियुक्तेन रथेन मृगं प्रति; गच्छंश्चाब्रवीत् सूतम्, "अश्वरत्नाविमावयोग्यौ ब्राह्मणानाम्, नैतौ प्रतिदेयौ वामदेवाय" इत्युक्त्वा मृगमवाप्य स्वनगरमेत्य, अश्वावन्तः-पुरेऽस्थापयत्।

"अथर्षिश्चिन्तयामास, "तरुणो राजपुत्रः कल्याणं[4]

---

[1] मनोजवौ—मनोवद्वेगशालिनौ।

[2] निर्यातयितव्यौ—प्रत्यर्पणीयौ।

[3] पुंस्त्वमार्षम्।

[4] कल्याणम्—शीघ्रगामित्वात् शुभकरम्।

पत्व[1]मासाद्य रमते, न मे वाम्यौ प्रतिनिर्यातयति[2] ; अहो कष्टम् !" इति ।

'स मनसा विचिन्त्य मासि पूर्णे शिष्यमब्रवीत्, "गच्छ आत्रेय, राजानं ब्रूहि, 'यदि पर्य्याप्तम्,[3] निर्यातयोपाध्यायवाम्यौ' इति ।" स गत्वैवं तं राजानमब्रवीत् । तं राजा प्रत्युवाच, "राज्ञामेतद् वाहनम्, अनर्हा ब्राह्मणा रत्नानामेवंविधानाम् ; किं ब्राह्मणानामश्वैः कार्य्यम् ? साधु गम्यताम्" इति ।

'स गत्वैतदुपाध्यायायाचष्ट । तच्छ्रुत्वा वचनमप्रियं वामदेवः क्रोधपरीतात्मा स्वयमेव राजानमभिगम्याश्वार्थमचोदयत् ; न चाददाद्राजा । [ततो वामदेवो ब्रह्मतेजसा चतुरो घोररूपान् राक्षसान् ससर्ज्ज, तैः शूलहस्तैः स राजा हतः । ततो नृपतिं निपातितं विदित्वेक्ष्वाकवो दलमभ्यषिञ्चन् ।']

---

[1] पत्वम्—वाहनम् ; 'पत्रं तु वाहने पर्णे स्यात् पक्षे शर-पक्षिणोः' इति मेदिनी ।

[2] प्रतिनिर्यातयति—प्रत्यर्पयति ।

[3] पर्य्याप्तम्—सिद्धम्, कार्य्यमिति शेषः ।

# इन्द्रद्युम्नचरितम्

मार्कण्डेयमृषयः पाण्डवाश्च पर्य्यपृच्छन्, 'अस्ति कश्चिद् भवतश्चिरजाततरः[1]?' इति। स तानुवाच, 'अस्ति खलु राजर्षिरिन्द्रद्युम्नो नाम क्षीणपुण्यस्त्रिदिवात् प्रच्युतः "कीर्त्तिर्मे व्युच्छिन्ना" इति।

'स मामुपातिष्ठत्, "अथ प्रत्यभिजानाति मां भवान्?" इति। तमहमब्रवम्, "न वयं वासायनिकाः,[2] कार्य्यचेष्टाकुलत्वाच्च[3] वयं प्रत्यभिजानीम आत्मनोऽप्यर्थानामनुष्ठानम्" इति। एवमुक्तो राजर्षिरिन्द्रद्युम्नो पुनर्मामब्रवीत्, "अथास्ति कश्चित्त्वत्तश्चिरजाततरः" इति। तं पुनः प्रत्यब्रवम्, "अस्ति[4] खलु हिमवति प्रावारकर्णो नामोलूकः प्रतिवसति, स मत्तश्चिरजातो भवन्तं यदि जानीयात्; इतः प्रकृष्टे चाध्वनि हिमवान्, तत्रासौ प्रतिवसति" इति।

---

[1] चिरजाततरः—वयोऽधिकः। चिरं जातस्य यस्य सः चिरजातः। अयमनयोरतिशयेन चिरजातः चिरजाततरः।

[2] वासायनिकाः—गृहस्थाः। नानातीर्थादिपरिभ्रमणात् वयं गृहस्थवद् एकस्थानवासिनो न भवाम इत्यर्थः।

[3] कार्य्यम्—पुण्यम्; तदर्थाश्चेष्टाः—तपोजपादिकाः; ताभिः आकुलत्वात्—व्यापृतत्वात् हेतोः; आत्मनः अर्थानाम्—देहधारणार्थवस्तूनाम्; अनुष्ठानम्—आयोजनमपि; न प्रत्यभिजानीमः—केनोपायेन जीविका निष्पद्येत इत्यपि न चिन्तयामः। तपोमग्ना वयं यदृच्छालब्धैः फलमूलादिभिरेव कथञ्चिज्जीवाम इत्यर्थः।

[4] वाक्यालङ्कारे; यद्वा, खलुशब्दादनन्तरं विरामः।

'ततः स मामश्वो भूत्वा तत्रावहद् यत्र बभूवोलूकः। अथैनं स राजा पप्रच्छ, "प्रत्यभिजानाति मां भवान्?" इति। स मुहूर्त्तमिव ध्यात्वाब्रवीदेनम्, "नाभिजानामि भवन्तम्" इति।

'स एवमुक्त इन्द्रद्युम्नः पुनस्तमुलूकमब्रवीद् राजर्षिः, "अथास्ति कश्चिद् भवतः सकाशाच्चिरजातः?" इति। स एवमुक्तोऽब्रवीत्, "अस्ति खलु इन्द्रद्युम्नं नाम सरः, तस्मिन् नाडीजङ्घो नाम बकः प्रतिवसति; सोऽस्मत्तश्चिरजाततरः, तं पृच्छ" इति।

'तत इन्द्रद्युम्नो मामुलूकं चादाय तत् सरोऽगच्छत्, यत्रासौ नाडीजङ्घो नाम बको बभूव। सोऽस्माभिः पृष्टः, "भवानिममिन्द्रद्युम्नं राजानमभिजानाति?" इति। स एवमुक्तोऽब्रवीन्मुहूर्त्तं ध्यात्वा, "नाभिजानाम्यहमिन्द्रद्युम्नं राजानम्" इति।

'ततः सोऽस्माभिः पृष्टः, "अस्ति कश्चिदन्यो भवतश्चिरजाततरः?" इति। स नोऽब्रवीत्, "अस्ति खलु; अस्मिन्नेव सरस्यकूपारो नाम कच्छपः प्रतिवसति, स मत्तश्चिरजाततरः; स यदि कथञ्चिदभिजानीयादिमं राजानम्, तमकूपारं पृच्छध्वम्" इति।

'ततः स बकस्तमकूपारं कच्छपं विज्ञापयामास, "अस्त्यस्माकमभिप्रेतं भवन्तं कञ्चिदर्थमभिप्रष्टुम्, साध्वागम्यतां तावत्" इति। तच्छ्रुत्वा कच्छपस्तस्मात् सरस

उत्थायाभ्यागच्छत्, यत्र तिष्ठामो वयम्। तस्य सरसस्तीरे आगतं चैनं वयमपृच्छाम, "भवानिन्द्रद्युम्नं राजानमभिजानाति?" इति। स सुकृतं ध्यात्वा बाष्पसम्पूर्णनयन उद्विग्नहृदयो वेपमानो विसंज्ञकल्पः प्राञ्जलिरब्रवीत्, "किमहमेनं न प्रत्यभिज्ञास्यामि? इह ह्यनेन सहस्रकृत्वश्चितिषु यूपा आहिताः,[1] सरश्चेदमस्य दक्षिणाभिर्दत्ताभिर्गोभिरतिक्रममाणाभिः कृतम्। अत्र चाहं प्रतिवसामि" इति।

'अथैतत् सकलं कच्छपेनोदाहृतं श्रुत्वा, तदनन्तरं देवलोकाद् देवरथः प्रादुरासीत्; वाचश्चाश्रूयन्त इन्द्रद्युम्नं प्रति, "प्रस्तुतस्ते स्वर्गः, यथोचितं स्थानं प्रतिपद्यस्व; कीर्त्तिमानसि, अव्यग्रो याहि" इति।

भवन्ति चात्र श्लोकाः—

दिवं स्पृशति भूमिं च शब्दः पुण्यस्य कर्म्मणः।
यावत् स शब्दो भवति, तावत् पुरुष उच्यते॥
अकीर्त्तिः कीर्त्त्यते लोके यस्य भूतस्य कस्यचित्।
स पतत्यधमाँल्लोकान् यावच्छब्दः प्रकीर्त्त्यते।
तस्मात् कल्याणवृत्तः स्यादनन्ताय नरः सदा।
विहाय चित्तं पापिष्ठं धर्म्ममेव समाश्रयेत्॥



---

[1] चितिषु—यज्ञवेदिकासु। यूपाः—संस्कृतपशुबन्धनार्थाः स्तम्भविशेषाः। बहुसहस्रयज्ञानुष्ठातायं राजा इत्यर्थः।

'इत्येतच्छ्रुत्वा स राजाब्रवीत्, "तिष्ठ तावत्, यावदिमौ वृद्धौ यथास्थानं प्रतिपादयामः" इति। स मां प्रावारकर्णं चोलूकं यथोचिते स्थाने प्रतिपाद्य तेनैव यानेन संसिद्धं यथोचितं स्थानं प्रतिपेदे।'

---

# शिबिचरितम्

ततः पाण्डवाः पुनर्मार्कण्डेयमूचुः, 'कथितं ब्राह्मणमाहात्म्यम्, राजन्यमाहात्म्यमिदानीं शुश्रूषामहे' इति।

तानुवाच मार्कण्डेयो महर्षिः, 'श्रूयतामिदानीं राजन्यानां माहात्म्यमिति—

'कुरूणामन्यतमः सुहोत्रो नाम राजा महर्षीनभिगम्य निवृत्य रथस्थमेव राजानमौशीनरं शिबिं ददर्शाभिमुखम्। तौ समेत्य परस्परेण यथावयः पूजां प्रयुज्य गुणसाम्येन परस्परेण तुल्यात्मानौ विदित्वान्योऽन्यस्य पन्थानं न ददतुः; तत्र नारदः प्रादुरासीत्, "किमिदं भवन्तौ परस्परस्य पन्थानमावृत्य तिष्ठतः?" इति। तावूचतुर्नारदम्, "नैतद् भगवन्; पूर्वकर्मकर्त्रादिभिर्विशिष्टस्य पन्था उपदिश्यते, समर्थाय वा; आवां च सख्यं परस्परेणोपगतौ, तच्चावधानतः। अतुल्यत्कृष्टमधरोत्तरं परिभ्रष्टम्" इति।

['नारद उवाच—]

"कृतं शतगुणं कुर्य्यान्नास्ति देवेषु निर्णयः।
औशीनरः साधुशीलो भवतो वै महीपतिः॥
जयेत् कदर्य्यं दानेन सत्येनानृतवादिनम्।
क्षमया क्रूरकर्माणमसाधुं साधुना जयेत्॥"

इति। एतच्छ्रुत्वा तु कौरव्यः शिबिं प्रदक्षिणं कृत्वा पन्थानं दत्त्वा बहुकर्मभिः प्रशस्य प्रययौ।'

* * * *

'देवानां कथा सञ्जाता, "महीतलं गत्वा महीपतिं शिबिमौशीनरं साध्वेनं शिबिं जिज्ञास्यामः[1]" इति। "एवं भोः" इत्युक्त्वा अग्नीन्द्रावुपतिष्ठेताम्। अग्निः कपोतरूपेण तमभ्यधावदामिषार्थमिन्द्रः श्येनरूपेण।

'अथ कपोतो राज्ञो दिव्यासनासीनस्योत्सङ्गं न्यपतत्। अथ पुरोहितो राजानमब्रवीत्, "प्राणरक्षार्थं श्येनाद् भीतो भवन्तं प्राणार्थी प्रपद्यते, वसु ददातु। अन्तवान् पार्थिवोऽस्य निष्कृतिं कुर्य्यात्[2] घोरं कपोतस्य निपातमाहुः"[3] इति।

---

[1] आर्षम्।

[2] अन्तवान्—दिगन्तानामीश्वरः, पार्थिवः—भवान्, अस्य निष्कृतिम्—कपोतस्य श्येनात् त्राणम्, कुर्य्यात्।

[3] घोरम्—निन्दितम्, अनिष्टसूचकम् इत्यर्थः। अकस्माद् देहे कपोतपतनं घोरमनर्थं सूचयति कपोतस्य मृत्युदूतत्वात्।

'अथ कपोतो राजानमब्रवीत्, "प्राणरक्षार्थं श्येनाद् भीतो भवन्तं प्राणार्थी प्रपद्ये। अङ्गैरङ्गानि प्राप्यार्थी मुनिर्भूत्वा प्राणांस्त्वां प्रपद्ये[1]। स्वाध्यायेन कर्षितं ब्रह्मचारिणं मां विद्धि, तपसा दमेन च युक्तमाचार्यस्या-प्रतिकूलभाषिणम्। एवंयुक्तमपापं मां विद्धि" इति।

'राजोवाच—

"नास्य वर्षं वर्षति वर्षकाले
नास्य बीजं रोहति काल उप्तम्।
भीतं प्रपन्नं यो हि ददाति शत्रवे
न त्राणं लभते त्राणमिच्छन् स काले॥

मोघमन्नं विन्दति चाप्रचेताः
स्वर्गाल्लोकाद् भ्रश्यति शीघ्रमेव।
भीतं प्रपन्नं यो हि ददाति शत्रवे
सेन्द्रा देवाः प्रहरन्त्यस्य वज्रम्॥

त्यजे प्राणान्नैव दद्यां कपोतं
सौम्यो ह्ययं किं न जानासि श्येन।
यथा क्लेशं मा कुरुष्वेह सौम्य
नाहं कपोतमर्पयिष्ये कथञ्चित्॥

---

[1] मुनिर्भूत्वापि अहम् 'अङ्गैः' स्वशरीरेण, 'अङ्गानि' कपोतशरीरम्, 'प्राप्य', 'प्राणान्' मम प्राणरक्षकत्वेन प्राणभूतं 'त्वाम्', 'प्रपद्ये' शरणं गतोऽस्मि। श्रोत्रियस्य मे श्येनाय त्वत्कर्तृकं दानं न साधुदानम् इति भावः।

यथा मां वै साधुवादैः प्रसन्नाः
प्रशंसेयुः शिबयः कर्मणा तु ।
यथा श्येन प्रियमेव कुर्य्यां
प्रशाधि मां यद् वदेस्तत् करोमि ॥" इति ॥

'श्येन उवाच—

"ऊरोर्दक्षिणादुत्कृत्य स्वपिशितं तावद् राजन्
यावन्मांसं कपोतेन समम् ।
तथा त्वस्मात् साधु त्रातः कपोतः प्रशंसेयुश्च
शिबयः कृतं च प्रियं स्यान्मम ॥"

'अथ स दक्षिणादूरोरुत्कृत्य स्वमांसपेशीं तुलया-धारयत्, गुरुतर एव कपोत आसीत् । पुनरन्यमुच्चकर्त्त, गुरुतर एव कपोतः । एवं सर्वं समधिकृत्य[1] शरीरं तुलायामारोपयामास, तथापि गुरुतर एव कपोत आसीत् । अथ राजा स्वयमेव तुलामारुरोह, न च व्यलीक[2]मासी-द्राज्ञः । एतद्वृत्तान्तं दृष्ट्वा "त्रातः" इत्युक्त्वा प्रालीयत श्येनः ।

'अथ राजाब्रवीत्—

कपोतं विद्युः शिबयस्त्वां कपोत
पृच्छामि ते शकुने को नु श्येनः ।
नानीश्वर ईदृशं जातु कुर्य्या-
देनं प्रश्नं भगवन् मे विचक्ष्व ॥

---

[1] समधिकृत्य—छित्त्वा ।

[2] व्यलीकम्—अप्रियम्, अन्तर्गतदुःखसूचकं मुखवैवर्ण्यादिकमित्यर्थः ।

'कपोत उवाच—

"वैश्वानरोऽहं ज्वलनो धूमकेतु-[1]
रथैव श्येनो वज्रहस्तः शचीपतिः ।
साधु ज्ञातुं त्वामृषभं सौरथेय
नौ[2] जिज्ञासया त्वत्सकाशं प्रपन्नौ ॥
एतासां प्रजानां पालयिता यशस्वी
सुरर्षीणामथ सम्मतो भृशम् ।
एतस्मात् पार्श्वात् पुरुषो जनिष्यति
कपोतरोमेति च तस्य नाम ॥"'

---

[1] 'धूमः' 'केतुः' चिह्नं यस्य सः ।
[2] नौ—आवाम्, पादादौ प्रयोग आर्षः ।

# श्रीमद्भागवतम्

## भरतोपाख्यानम्[1]

श्रीशुक उवाच—

'भरतस्तु महाभागवतो यदा भगवतावनितल-परिपालनाय सञ्चिन्तित[2]स्तदनुशासनपरः पञ्चजनीं विश्वरूपदुहितरमुपयेमे। तस्यामु ह वा आत्मजान् कार्त्स्न्येनानुरूपानात्मनः पञ्च जनयामास भूतादि[3]रिव भूतसूक्ष्माणि, सुमतिं राष्ट्रभृतं सुदर्शनमावरणं धूम्रकेतुमिति। अजनाभं नामैतद्वर्षं भारतमिति यत आरभ्य व्यपदिशन्ति।

'स च बहुविन्महीपतिः पितृपितामहवदुरुवत्सलतया स्वे स्वे कर्म्मणि वर्त्तमानाः प्रजाः स्वधर्म्ममनुवर्त्तमानः पर्य्यपालयत्, ईजे च भगवन्तं यज्ञक्रतुरूपं[4] क्रतुभिरुच्चा-

---

[1] पञ्चमस्कन्धे सप्तमोऽध्यायः।

[2] संकल्पेनैव राज्यादौ नियुक्तः।

[3] भूतादिः—अहङ्कारः।

[4] यज्ञा अयूपाः, क्रतवः सयूपाः।

वचैः[1]। संप्रचरत्सु नानायागेषु क्रियाफलं धर्म्माख्यं परे ब्रह्मणि यज्ञपुरुषे भगवति वासुदेव एव भावयमान आत्मनैपुण्यमृदितकषायो[2] हविःष्वध्वर्य्युभिर्गृह्यमाणेषु स यजमानो यज्ञभाजो देवांस्तान् पुरुषावयवेष्वभ्यध्यायत्[3]।

'एवं कर्म्मविशुद्ध्या विशुद्धसत्त्वस्य भगवति वासुदेव आत्मनि पुरुषरूपेण विरोचमान उच्चैस्तरां[4] भक्तिरनुदिनमेधमानरया[5]जायत। एवं वर्षायुतसहस्र-पर्य्यन्तावसित-[6]कर्म्मनिर्व्वाणावसरोऽधिभुज्यमानं स्वतनयेभ्यो रिक्थं पितृपैतामहं यथादायं विभज्य स्वयं सकलसम्पन्निकेतात् स्वनिकेतात् पुलहाश्रमं प्रवव्राज।

'यत्र ह वाव भगवान् हरिरद्यापि तत्रत्यानां निज-

---

[1] महद्भिरल्पैश्च कर्म्मभिः। उदक् च अवाक् च उच्चावचम्। मयूरव्यंसकादित्वात् साधुः। "उच्चावचं नैकभेदम्" इत्यमरः।

[2] 'आत्मनो नैपुण्यं' कौशलं तेन 'मृदिताः' क्षीणाः 'कषाया' रागादयो यस्य सः।

[3] ये 'देवाः' सूर्य्यादयस्तान् 'पुरुषस्य' वासुदेवस्य 'अवयवेषु' चक्षुरादिषु 'अभ्यध्यायत्', न तु तत्पृथक्त्वेन इत्यर्थः।

[4] "वीप्सप्रतियोग्यपेक्षायामप्यातिशायनिकाः" इति वामनसूत्रेण तरप्-प्रत्यये "किम्-एत्-तिङ्-अव्यय-घादाम्वद्रव्यप्रकर्षे" इति आमुः। (द्रव्यप्रकर्षे तु—उच्चैस्तरस्तरुः।) एधमानक्रियाया विशेषणम्।

[5] 'एधमानो' 'रयो' वेगप्रकर्षो यस्याः सा।

[6] 'अवसितो' निश्चितः 'कर्म्मनिर्व्वाणावसरो' राज्यभोगादृष्टसमाप्तिसमयः येन सः।

जनानां वात्सल्येन सन्निधाप्यत इच्छारूपेण[1]; यत्राश्रम-पदान्युभयतोनाभिभि[2]र्दृषच्चक्रैश्चक्रनदी[3] नाम सरित्प्रवरा सर्व्वतः पवित्रीकरोति। तस्मिन् वाव किल स एकलः पुलहाश्रमोपवने विविध-कुसुम-किसलय-तुलसिकाम्बुभिः कन्दमूलफलोपहारैश्च समीहमानो भगवत आराधनम्, विविक्त[4] उपरत-विषयाभिलाष उपसम्भृतोपशमः[5] परां निर्वृतिमवाप।

'तयेत्थमविरतपुरुषपरिचर्य्यया भगवति प्रवर्द्धमानानु-रागभरद्रुत-हृदयशैथिल्यः प्रहर्षवेगेनात्मन्युद्भिद्यमान-रोम-पुलककुलक औत्कण्ठ्यप्रवृत्तप्रणयबाष्प-निरुद्धावलोकनयन एवं[6] निजरमणारुण-चरणारविन्दानुध्यानपरिचितभक्ति-योगेन परिप्लुतपरमाह्लाद-गम्भीरहृदयह्रदावगाढधिषण[7]-स्तामपि क्रियमाणां भगवत्सपर्य्यां न सस्मार।

---

[1] भक्तानामपेक्षितेन रूपेण।

[2] उभयतः उपर्य्यधश्च नाभिर्येषाम् तैः। [3] गण्डकी।

[4] शुद्धः। "विविक्तौ पूतविजनौ" इत्यमरः।

[5] उपसम्भृतः—संवृद्धः।

[6] एवं वर्त्तमानः 'तामपि भगवत्सपर्य्यां न सस्मार' इत्यन्वयः। तत्र हेतुः—'निजरमण'स्य स्वप्रीतिदातुः ये 'अरुणे चरणारविन्दे' तयो'रनुध्यानेन' 'परिचितः' समृद्धो 'भक्तियोग'स्तेन।

[7] 'परिप्लुतः' सर्व्वतोव्याप्तः 'परमाह्लादः' परमानन्दो यस्मिन् 'गम्भीर-हृदयह्रदे' तस्मिन् 'अवगाढा' निमग्ना 'धिषणा' बुद्धिः यस्य सः।

'इत्थं' धृतभगवद्व्रत ऐणेयाजिनवाससानुसवनाभिषेकार्द्र-कपिशकुटिलजटाकलापेन च विरोचमानः सूर्य्यर्चा[1] भगवन्तं हिरण्मयं पुरुषमुज्जिहाने[2] सूर्य्यमण्डलेऽभ्युपतिष्ठन्नास्त ।

---

[1] सूर्य्यप्रकाशिकया ऋचा । समासान्ताभाव आर्षः ।

[2] उद्गच्छति सति ।

# बालचरितम्

## श्रीकृष्णजन्म

वसुदेवः—अयि पुत्रवत्सले देवकि! अर्धरात्रं खलु वर्त्तते। प्रसुप्तो मथुरायां सर्वो जनः। तस्माद् यावन्न कश्चित् पश्यति, तावद् बालं गृहीत्वापक्रामामि। एकच्छत्रच्छायां पृथिवीं समाज्ञापयति दुरात्मा कंसः। तदहमपि न जाने क्व नु खल्वयमायुष्मान् नेतव्यो भविष्यति, अथवा यत्र दैवं विधास्यति तत्र बालं गृहीत्वापक्रामामि। त्वया सुदृष्टस्यास्य कंसो मृत्युर्भविष्यति, प्रविश त्वमभ्यन्तरम्।

एषा देवकी

हृदयेनेह तत्राङ्गैर्द्विधाभूतेव गच्छति।
यथा नभसि तोये च चन्द्रलेखा द्विधाकृता॥

हन्त! प्रविष्टा देवकी, यावदहमपि नगरद्वारं संश्रयामि। अये! प्रसुप्तो मथुरायां सर्वो जनः। एष निष्क्रान्तोऽस्मि मथुरायाः।

अहो! बलवांश्चायमन्धकारः। सम्प्रति हि

लिम्पतीव तमोऽङ्गानि वर्षतीवाञ्जनं नभः।
असत्पुरुषसेवेव दृष्टिर्निष्फलतां गता॥

नाहं गन्तुं समर्थः। अये! दीपिकालोकः! किन्नु खलु दुरात्मा कंसो ममापक्रमणं ज्ञात्वा दीपिकाभिः परिवृतो मां ग्रहीतुमागतो भवेत्? भवत्वहमस्य दर्प-प्रशमनं करोमि। (खड्गमुत्कोशयति) अये! न कश्चित् दृश्यते! आ!

तमसा संवृते लोके मम मार्गमपश्यतः।
अपक्रमणहेतोस्तु कुमारेण प्रभा कृता॥

एष मार्गः। अये! इयं भगवती यमुना कालवर्ष-सम्पूर्णा सन्निहिता। अहो! व्यर्थो मे परिश्रमः। किमिदानीं करिष्ये? हन्त! द्विधा छिन्नं जलम्, इतः स्थितम्, इतः प्रधावति! दत्तो मे भगवत्या मार्गः। निष्क्रान्तोऽस्मि यमुनायाः। अये! हुङ्कारशब्द इव श्रूयते, व्यक्तं घोषसमीपे वर्त्तते मन्दभाग्यः। आ, अत्र च समीपघोषे मम वयस्यो नन्दगोपः प्रतिवसति। स खलु मया कंसाज्ञया निगलितः कशाभिहतश्च। यावत् प्रविशामि, अथवा रात्रौ वसुदेवः प्रविष्ट इति शङ्किता गोपालका भविष्यन्ति, तस्मादिह न्यग्रोधपादपस्याधस्तात् प्रभातवेलां रजन्याः प्रतिपालयामि। भो भो न्यग्रोध-देवताः! यद्ययं बालो लोकहितार्थः कंसवधार्थं वृष्णि-कुले प्रसूतः स्यात् घोषात् कश्चिदिहागच्छतु।—न, न, मम वयस्यो नन्दगोप एवागच्छतु।

को नु खल्वयं रात्रौ परिदेवयति? अस्मत्-

सब्रह्मचारी खल्वयं तपस्वी। स्वरेण प्रत्यभिजानामि मम वयस्येन नन्दगोपेन भवितव्यम्। यावच्छब्दापयामि। वयस्य नन्दगोप! इतस्तावत्। अलमन्यशङ्कया, इतस्तावत्। वयस्य, अपि भगवतीभ्यो गोभ्यः कुशलम्? अथ भवतः परिजनस्य कुशलम्? वयस्य, किमिदानीं प्रच्छादयते? मम खलु प्राणैः शापितः स्याद् यदि सत्यं न ब्रूयात्। किं ब्रवीषि, देव्या यशोदया प्रसूता जातमात्रैवापगतप्राणा दारिका? हन्त भोः! ईदृशो लोकधर्मः। त्यज्यतां काष्ठभूतं कलेवरम्। वयस्य, अलमलं रुदितेन, उत्तिष्ठोत्तिष्ठ। ननु त्वमपि जानासि दुरात्मना कंसेन मम षट् पुत्रा निधनमुपानीताः, तत् सप्तमोऽयं दीर्घायुः, नास्ति मम पुत्रेषु भाग्यम्, तव भाग्याज्जीवितुं गृह्यताम्। वयस्य, प्रभाता रजनी, प्रतिनिवर्त्ततां भवान्।

ननु निर्गतो नन्दगोपः। यावदहमपि मधुरामेव यास्यामि। (परिक्रम्य) अये! रुदितशब्द इव श्रूयते! (परिक्रम्य) अये! प्रत्यागतप्राणेयं दारिका! यावदिमां गृहीत्वा देवक्या हस्ते निक्षिप्य दुरात्मानं कंसं वञ्चयामि। (गृहीत्वा) अहो गुरुत्वमस्याः! एतदपि कुमारात् किञ्चिदन्तरं महद् भूतम्। यावदपक्रामामि।

---

# वासवदत्ता

## वासवदत्तायाः शापवृत्तान्तः

अथ पतङ्गमण्डले मध्यं नभःस्थलस्यारूढे कन्दर्पकेतुः प्रबुद्धः प्रियया विनाकृतं लतागृहमवलोक्य, उत्थाय च तत इतो दत्तदृष्टिः क्षणं विटपिषु क्षणं लतान्तरेषु, क्षणमधः कूपेषु क्षणमूर्ध्वं तरुशिखरेषु, क्षणं दिक्षु क्षणं विदिक्षु च भ्रमन्ननवरतविरहानलदह्यमानहृदयो बहु विललाप—हा प्रिये वासवदत्ते! देहि मे दर्शनम्। कृतं परिहासेन। अन्तर्हितासि, त्वत्कृते यानि दुःखान्यनुभूतानि तेषां त्वमेव प्रमाणम्। अहो विपाको नियतेरिति।

ततो मरीच्युर्दक्षिणेन काननं निर्गत्य फेनराजिभिरुपान्तरमणीयम् अपरमिव गगनतलम् भुवनमवतीर्णं वडवामुखगतवारिजातं करिमकरमङ्कुलं सरोषमिव गर्जितैः सभ्रूभङ्गमिव तरङ्गैर्लवणोत्पत्तिस्थानं करतोयाप्लुतमुखं चन्दनोदकसिक्तं नर्मदानुगतम् अनेकमुक्तालङ्कृतं सुन्दरीपरिवृतकण्ठं जलनिधिमपश्यत्। अचिन्तयच्च—अहो मे कृतापकारेणापि विधिना उपकृतिरेव कृता यदयं लोचनगोचरतां गतः समुद्रः। तदत्र देहं त्यजामि।

यद्यपि अनातुरस्यात्मत्यागो न विहितस्तथापि कार्य्यः। ततः कृतस्नानादिसकलकृत्यो जलनिधिजलमवतरितुमारेभे शरीरत्यागाय।

अथ सानुग्रहेषु ग्राहेषु अनिच्छेषु कच्छपेषु अक्रूरेषु नक्रेषु अभयङ्करेषु मकरेषु आकाशात् सरस्वती समुदचरत् —आर्य्य कन्दर्पकेतो, पुनरपि तव प्रियया सङ्गतिर्भविष्यत्यचिरेण; तद् विरम मरणव्यवसायादिति। सोऽपि तदुपश्रुत्य मरणारम्भाद् विरराम। ततः प्रियासमागमाशया शरीरस्थितिहेतुमशनं चिकीर्षुः फलमूलादिना वने वर्त्तयन् परिभ्रमन् कतिचिन् मासान् निनाय।

अथ मेघकुम्भसलिलैः पृथिवीनायिकां स्नपयित्वा प्रावृट्चेटिकायां गतायां स्वच्छमम्बरं दर्शयन्ती शरच्चेटिका समाजगाम। एकदा च परिभ्रमन् स काञ्चित् शिलामयीं पुत्तिकां दृष्ट्वा मम प्रियानुकारिणीति करेण पस्पर्श। अथ सा स्पृष्टमात्रैव शिलाभावमुत्सृज्य वासवदत्तास्वरूपं प्रपेदे। ताम् अवलोक्य कन्दर्पकेतुः 'प्रिये वासवदत्ते, किमेतद् ?' इति पप्रच्छ।

सा तु दीर्घमुष्णञ्च निःश्वस्य प्रत्युवाच—'आर्य्यपुत्र, अपुण्याया मन्दभाग्याया मम कृते महाभागो भवान् उत्सृष्टराज्य एकाकी परिभ्रमन् प्राकृतजन इव अवाङ्मनसगोचरं दुःखमनुबभूव। उपवासादिना तृषातुरे भवति निद्रायान्ते प्रथमप्रबुद्धाहं भवतः फलमूलादिकमा-

हरिष्यामीति विचिन्त्य फलाद्यन्वेषणाय वने नत्वमात्र-मगच्छम्।

'अथ चणेन तरुगुल्मान्तरितं सेनानिवेशं दृष्ट्वा किमयं-ममाकर्षणाय तातव्यूहः समायातः, आहोस्विद् आर्य्यपुत्र-व्यूह इति चिन्तयन्तीं मां चारकथितोदन्तो दूरात् किरात-सेनापतिर्धावति स्म। ततोऽन्यः किरातसेनापतिरपि मृगयां गतः तच्छ्रुत्वा धावति स्म। अथ एकामिषलुब्धयो-र्गृध्रयोरिव तयोर्युद्धमासीत्। ततो विध्वस्तध्वजपटं पतत्-पताकं तत् समस्तमुभयं मिथो जगाम हननं सैन्यम्।

'ततश्च यस्याश्रमः तेन मुनिना पुष्पादिकमादायागतेन योगदृष्ट्या प्रतिपन्नवृत्तान्तेन त्वत्कृते ममायम् आश्रमो भग्न इति कुपितेन "शिलामयी पुत्रिका भवे"ति शप्तास्मि। ततः चणेनैव इयं वराकी बहुदुःखमनुभवतीति अनुग्रहाद् आर्य्यपुत्रकरुणया च स मुनिर्याच्यमान आर्य्यपुत्रहस्तस्पर्शा-वधिकं शापमकरोत्।'

ततः कन्दर्पकेतुः श्रुतवृत्तान्तेन समागतेन मकरन्देन तया च समं स्वपुरं गत्वा हृदयाभिलषितानि सुरलोक-दुर्लभानि सुखानि ताभ्यां सह अनुभवन् कालमनेकं निनाय।

———

# हर्षचरितम्

## नियतेः प्रभुत्वम्

नियतिर्विधाय पुंसां प्रथमं सुखमुपरि दारुणं दुःखम् ।
कृत्वालोकं तरला तडिदिव वज्रं निपातयति ॥

अस्ति पुण्यकृतामधिवासो वासवावास इव वसुधामवतीर्णः कृतमधुरकोलाहलैर्हलैरुल्लिख्यमानक्षेत्रः प्रति दिशमपूर्वपर्वतकैरिव शस्यकूटैः सङ्कटसीमान्तः क्षीरं क्षरद्भिस्तृणत्रसैर्गोधनैर्धवलितविपिनः सहस्रसंख्यैः कृष्णशारैः शारीकृतोद्देशः प्रत्यग्रफलरसपानसुखसुप्तपथिकैर्द्राक्षामण्डपैः स्फुरत्फलानाञ्च दाडिमीनां वनैरभिरामः श्रीकण्ठो नाम जनपदः ।

तत्र चैवंविधे स्थाण्वीश्वराख्यो जनपदविशेषो यः तपोवनमिति मुनिभिः, चिन्तामणिभूमिरिति अर्थिभिः, विश्वकर्ममन्दिरमिति विज्ञानिभिः, गुरुकुलमिति विद्यार्थिभिः, वीरक्षेत्रमिति शस्त्रोपजीविभिरज्ञायत । तत्र च साक्षात् सहस्राक्ष इव गुरुर्वचसि पृथुरुरसि विशालो मनसि जनकस्तपसि अर्जुनो यशसि भीष्मो धनुषि शत्रुघ्नः समरे दक्षः प्रजाकर्मणि राजा पुष्पभूतिरिति नाम्ना बभूव । अथ क्रमेण तद्वंशे उदपादि क्षण-हरिण-

केसरी मालवलक्ष्मीलतापरशुः प्रतापशील इति प्रथितापर-नामा प्रभाकरवर्धनो नाम राजाधिराजः। तस्य च जन्मान्तरेऽपि सती पार्वतीव शङ्करस्य गृहीतहृदया यशोवती नाम महादेवी प्राणानां प्रणयस्य विस्रम्भस्य धर्मस्य सुखस्य च भूमिरभूत्। निसर्गत एव च स नृपतिरादित्यभक्तो बभूव। प्रसादाच्च भगवतः अंशु-मालिनः देव्यां यशोवत्याम् क्रमेण सम्बभूव अतिगुणवद् अपत्यत्रयं राज्यवर्धनो हर्षो राज्यश्रीरिति। अथ क्रमेण निपुणेभ्य आचार्येभ्यः समधिगतशस्त्रशास्त्रौ प्रजानन्देन सह वर्धमानौ तौ कुमारौ धनुर्ध्वनिभिः सर्वस्यामेव पृथिव्यां स्वल्पीयसैव कालेन प्रकाशतां जग्मतुः।

अथ राज्यश्रीरपि नृत्यगीतादिषु सकलासु कलासु च प्रतिदिनम् उपचीयमानपरिचया चन्द्रलेखेव शनैः शनैरवर्धत। निपेतुश्च एकस्यां तस्यां शरा इव लक्ष्यभुवि भूभुजां सर्वेषां दृष्टयः। दूतप्रेषणादिभिश्च तां ययाचिरे राजानः। ततो धरणीधराणां मूर्ध्नि स्थितो माहेश्वरो मौखरो वंशः, तत्रापि तिलकभूतस्य अवन्तिवर्मणः सूनुः अग्रजो ग्रहवर्म्मा नाम ग्रहपतिरिव गां गतः पितुरन्यूनो गुणैरिति तस्मै राजा दुहितरं सम्प्रददे।

अथ कदाचित् राजा राज्यवर्धनं कवचहरम् आहूय हूणान् हन्तुं हरिणानिव हरिर्हरिणीशकिशोरम् अपरिमित-बलानुयातं चिरन्तनैरमात्यैरनुरक्तैश्च महासामन्तैः कृत्वा

साभिसरम् उत्तरापथं प्राहिणोत्। प्रयान्तञ्च तं देवो हर्षः कतिचित् प्रयाणकानि तुरङ्गैरनुवव्राज। एकदा तु कुरङ्गकनाम्नो वार्त्ताहारिण आकर्ण्य तातस्य दाहज्वरो महानिति वेपमानहृदय आरुह्य तुरङ्गमम् एकाकी एव राजधानीं प्रतिनिवृत्तः पितरि सुतरां जीविताशां शिथिलीचकार; प्राहिणोच्च त्वरमाणो भ्रातुरागमनार्थम् उपर्य्युपरि क्षिप्रपातिनो दीर्घाध्वगान् उष्ट्रपालान्। शयनीये स्वयं निपत्य उत्तरीयवाससा सोत्तमाङ्गम् आत्मानमवगुण्ठ्यातिष्ठत्।

तदवस्थे च राजनि सर्वस्य लोकस्य कपोलेषु कीलिता इव कराः। दोलायमानसकलकुलाचला पत्या सार्द्धं गन्तुकामेव अचलद् धरित्री।

ततः प्रविशन्नेव राजकुलं निर्यान्तीं गृहीतमरणप्रसाधनां जानकीमिव जातवेदसं पत्युः पुरः प्रवेक्ष्यन्तीं, प्रत्यग्रस्नानार्द्रदेहतया श्रियमिव भगवतीं सद्यः समुद्रादुत्थितां कुसुम्भवभ्रुणी वाससी दधानां चितानलार्चनकुसुमैरिव धवलधवलैरश्रुविन्दुभिः अंशुकोत्सङ्गम् आपूरयन्तीं गृहपतत्रिणामपि अञ्जलिं पुरस्ताद् उपरचयन्तीं पशूनपि आपृच्छमानां भवनपादपानपि परिष्वजमानां मातरं ददर्श देवो हर्षः। दूरादेव च वाष्पायमाणदृष्टिः —अम्ब, त्वमपि मां मन्दपुण्यं त्यजसि, प्रसीद, निवर्त्तस्वेति अभिदधान एव चरणयोर्न्यपतत्। ततः प्रशान्ते मन्युवेगे सस्नेहमुत्थापयामास देवी सुतम्, अवादीच्च—वत्स, नासि

न प्रियो निर्गुणो वा परित्यागार्हो वा। कुलकलत्रमस्मि चारित्रधना धर्मधवले कुले जाता। वीरजा वीरजाया वीरजननी च मादृशी पराक्रमक्रीता कथम् अन्यथा कुर्यात्? कृतार्थसर्वावयवा किमपरम् अपेक्षे क्षीणपुण्या? भर्त्तुमविधवैव वाञ्छामि। पितुश्च ते पादधूलिरिव प्रथमं गगनगमनम् आवेदयन्ती बहुमता भविष्यामि शूरानुरागिणीनां सुराङ्गनानाम्। अतिशीतलः पतिशोकानलाद् अक्षयस्नेहेन्धनाद् अस्माद् अनलः। वत्स, विश्वस्तानां यशसा स्थातुमिच्छामि लोके न वपुषा' इति उक्त्वा देवी यशोवती तं परिष्वज्य समाघ्राय च शिरसि सरस्वतीतीरं ययौ। तत्र च स्त्रीस्वभावकातरैर्दृष्टिपातैः प्रविकसितरक्तपङ्कजैरिव अर्चयित्वा भगवन्तं भानुमन्तमिव मूर्त्तिरैन्दवी चित्रभानुं प्राविशत्। राजसिंहश्च निमिमील लोचने अपुनरुन्मीलनाय। अस्मिन्नेवान्तरे पूषापि आयुषेव तेजसा व्ययुज्यत।

अथ यस्मिन्नहनि अवनिपतिरुपरत इत्यभूद् वार्त्ता तस्मिन्नेव देवो ग्रहवर्मा दुरात्मना मालवराजेन जीवलोकमात्मनः सुकृतेन सह त्याजितः। राज्यश्रीरपि कालायसनिगडचुम्बितचरणा चौराङ्गनेव संयता कान्यकुब्जे कारायां निक्षिप्ता। किंवदन्ती चाभूद् अनायकं साधनं मत्वा जिघृक्षुः स दुर्मतिः पुष्पभूतिकुलभूमिमपि आजिगमिषतीति।

ततश्च तादृशमनुपेक्षणीयमसम्भावितम् आकस्मिकमपरं व्यतिकरमाकर्ण्य वीरत्वेनसम्भवत्वात् जन्मनः कृपाभूमि-भूतायाश्च स्वसुः स्नेहात् हूणनिर्जयसमरप्रत्यावृत्तः अयुत-मात्रेण तुरङ्गमाणां निर्जगाम अभ्यमित्रं देवो राज्यवर्धनः महीयसा मन्युना अन्तरिततापः। अथ तथागते भ्रातरि उपरते च पितरि मृतायाञ्च मातरि संयतायाञ्च नाशित-प्रियतमायां स्वसरि स्वयूथभ्रष्ट इव वन्यः करी देवो हर्षः कथं कथमपि एकाकी कालं तमनैषीत्।

अतिक्रान्तेषु बहुषु वासरेषु कदाचित् तथैव भ्रातृ-गमनदुःखासिकया दत्तप्रजागरः त्रिभागशेषायां त्रियामायां यामिकेन गीयमानामिमामार्यां शुश्राव—

द्वीपोपगीतगुणमपि समुपार्जितरत्नराशिसारमपि।
पोतं पवन इव विधिः पुरुषमकाण्डे निपातयति॥

ताञ्च श्रुत्वा सुतरां दूयमानहृदयः प्रक्षीणभूयिष्ठायां क्षपायां क्षणमिव निद्रामलभत, स्वप्ने च अभ्रंलिहं लोहस्तम्भं भज्यमानमपश्यत्। अथ प्रबुद्ध आस्थानगतश्च सहसैव प्रविशतो विषण्णवदनेन मलिनेन पटेन मूकेन मुखेन अविच्छिन्नैरश्रुबिन्दुभिश्च स्वामिव्यसनं विज्ञापयतः बृहदश्ववारात् हेलानिर्जितमालवानीकमपि मिथ्योपचारोप-चितविश्वासं मुक्तशस्त्रम् एकाकिनं विश्रब्धं स्वभवने एव भ्रातरं व्यापादितमश्रौषीत्।

---

# कादम्बरी



## कुमार-चन्द्रापीडस्य विद्याधिगमः

क्रमेण कृतचूडाकरणादि-क्रियाकलापस्य शैशवम् अतिचक्राम कुमारस्य चन्द्रापीडस्य। ततो महाराजस्तारापीडः क्रीडाव्यसङ्गविघातार्थं बहिर्नगरम् अनुशिप्रम् अर्द्धक्रोशमात्रायामम् अतिमहता तुहिनगिरिशिखरानुकारिणा सुधाधवलेन प्राकारमण्डलेन परिवृतम् अनुप्राकारम् आहितेन महता परिखावलयेन परिवेष्टितम् अतिदृढकपाटसम्पुटम् उद्घाटितैकद्वारप्रवेशम् एकान्तोपरचिततुरगवाह्यालीविभागम् अधःकल्पितव्यायामशालम् अमरागाराकारम् अकारयत् विद्यामन्दिरम् सर्वविद्याचार्य्याणां च संग्रहे यत्नम् अतिमहान्तम् अन्वतिष्ठत् भूपतिः।

तत्रस्थं च तं केसरि-किशोरकम् इव पञ्जरगतं कृत्वा प्रतिषिद्धनिर्गमम् आचार्य्यकुलपुत्रप्रायपरिजनम् परिवारम् अपनीताशेषशिशुजनक्रीडाव्यसङ्गम् अनन्यमनसम् अखिलविद्योपादानार्थम् आचार्य्येभ्यः शोभने दिवसे कुमारं चन्द्रापीडम् अर्पयाम्बभूव वैशम्पायनद्वितीयम्। प्रतिदिनं च

सह महिष्या विलासवत्या विरलपरिजनो गत्वा तत्र मालवनाथ आलोकयामास तनुजं चन्द्रापीडम्।

कुमारश्चन्द्रापीडोऽपि राज्ञा तथा नियन्त्रितोऽनन्य-हृदयतया कालेनाचिरेणैव यथास्वम् आत्मकौशलं प्रकटयद्भिः पात्रवशाद् उपजातोत्साहैराचार्य्यैः जग्राह सर्वविद्या उपदिश्यमानाः। मणिदर्पण इवातिनिर्म्मले तस्मिन् सञ्चक्राम सकलः कलाकलापः। तथा हि—पदे वाक्ये प्रमाणे धर्म्मशास्त्रे राजनीतिषु व्यायामविद्यासु सर्वेष्वायुधविशेषेषु रथचर्य्यासु गजपृष्ठेषु तुरङ्गमेषु वीणा-वेणु-मुरज-प्रभृतिषु वाद्येषु भरतादिप्रणीतेषु नृत्यशास्त्रेषु नारदीयप्रभृतिषु गान्धर्व्ववेदविशेषेषु हस्तिशिक्षायां तुरग-वयोज्ञाने पुरुषलक्षणेषु चित्रकर्म्मणि यन्त्रच्छेद्ये पुस्तक-व्यापारे लेख्यकर्म्मणि सर्वासु द्यूतकलासु शकुनि-रुतज्ञाने ग्रहगणिते रत्नपरीक्षासु नाटकेषु काव्येषु महाभारत-पुराणेतिहासरामायणेषु सर्वलिपिषु सर्वदेशभाषासु शिल्पेषु छन्दःसु इन्द्रजाले कलाविशेषेष्वपि परम् अवाप कौशलम्। श्रमम् अभ्यस्यतो वृकोदरस्येव शैशव एवा-विर्बभूव सहजा सर्वलोकविस्मयजननी महाप्राणता। ऋते च महाप्राणतायाः सर्वाभिरन्याभिः कलाभिरनुचकार तं मन्त्रिकुमारो वैशम्पायनः। परं कुमारस्य सहपांशु-क्रीडनतया सहसंवृद्धतया च सर्वविश्रम्भस्थानं द्वितीयम् इव हृदयं वैशम्पायनो मन्त्रिनन्दनः परमम् अभूत् मित्रम्।

निमेषम् अपि तेन विना स्थातुम् एकाकी न शशाक कुमारः। वैशम्पायनोऽपि न क्षणम् अपि तं विरहयाञ्चकार। एवं तस्य सर्वविद्यापरिचयम् आचरतश्चन्द्रापीडस्य यौवनारम्भः प्रादुर्भवन् रमणीयस्यापि द्विगुणां पुपोष रमणीयताम्।

एवं च क्रमेण समारूढयौवनारम्भं परिसमाप्तसकलकलाविज्ञानम् अनुमोदितम् आचार्य्यैः कुमारम् आनेतुं चन्द्रापीडं राजा बलाधिकृतं बलाहकनामानम् आहूय बहुतुरगबलपदातिपरिवृतम् अतिप्रशस्तेऽहनि प्राहिणोत्। स च गत्वा विद्यामन्दिरं द्वारपैः समावेदितः प्रविश्य क्षितितलविलम्बितचूडामणिना शिरसा प्रणम्य सविनयम् आसने राजपुत्रानुमतो न्यषीदत्। ततो दर्शितविनयो बलाहको व्यजिज्ञपत् कुमारम्, "भर्त्तृदारक, महाराजः समाज्ञापयति—पूर्णा मे मनोरथाः, अधीतानि शास्त्राणि, शिक्षिताः सकलाः कलाः, गतोऽसि सर्वायुधविद्यासु परां प्रतिष्ठाम्, अनुमतोऽसि निर्गमाय विद्यागृहात् सर्वाचार्य्यैः, उपगृहीतशिक्षं पश्यतु त्वां जनः, व्रजन्तु सफलताम् अतिचिरदर्शनोत्कण्ठितानि लोकलोचनानि, दर्शनं प्रति ते समुत्सुकान्यतीव सर्वाण्यन्तःपुराणि। अयम् अत्रभवतो दशमो वत्सरो विद्यागृहम् अधिवसतः, प्रविष्टोऽसि षष्ठम् अनुभवन् वर्षम्, एवं सम्पिण्डितेनाधुना षोडशेन प्रवर्द्धसे, तत् अद्य प्रभृति निर्गत्य दर्शनोत्-

सुकाभ्यो दत्त्वा दर्शनं मातृभ्योऽभिवाद्य च गुरून् अपगत-नियन्त्रणो यथासुखम् अनुभव राज्यसुखानि। सम्मानय राजलोकम्, पूजय द्विजातीन्, परिपालय प्रजाः, आनन्दय बन्धुवर्गम्। अयं च ते त्रिभुवनैकरत्नम् इन्द्रायुधनामा तुरङ्गमः प्रेषितो महाराजेन द्वारि तिष्ठति। एष खलु देवस्य पारसीकाधिपतिना त्रिभुवनाश्चर्य्यम् इति कृत्वा "जलनिधिजलाद् उत्थितम् अश्वरत्नम् आसादितं मया महाराजाधिरोहणयोग्यम्" इति सन्दिश्य प्रहितः' इत्य-भिधाय विरतवचसि बलाहके कुमारश्चन्द्रापीडः पितुराज्ञां शिरसि कृत्वा नवजलधरध्वानगम्भीरया गिरा 'प्रविश्यताम् इन्द्रायुधः' इति निर्जिगमिषुरादिदेश।

अथ वचनानन्तरम् एव प्रवेशितम् अद्राक्षीत् अश्वातिशयम् इन्द्रायुधम्। दृष्ट्वा च कुमारस्य पस्पर्श विस्मयो हृदयम्। आसीच्चास्य मनसि 'अतितेजस्वितया महाप्राणतया च सदैवतेवेयम् अस्याकृतिर्यत्सत्यम् आरोहणे शङ्काम् इव मे जनयति। न हि सामान्य-वाजिनाम् ईदृश्यो भवन्त्याकृतयः। दैवतान्यपि हि मुनिशापवशाच्छरीरान्तराण्यध्यासत एव। श्रूयते हि पुरा महात्मानो मुनिजनशापपरिपीतप्रभावा नानाकारा भूत्वा बभ्रमुरिमं लोकम्। असंशयम् अनेनापि महात्मना केनापि शापभाजा भवितव्यम्। आवेदयतीव मदन्तः-करणम् अस्य दिव्यताम्।' इति विचिन्तयन्नेवारुरुक्षुः

रासनाद् उदतिष्ठत्। मनसा च तं तुरङ्गमम् उपसृत्य 'महात्मन् अर्वन्! योऽसि सोऽसि, नमोऽस्तु ते, सर्वथा मर्षणीयोऽयम् आरोहणातिक्रमो नः। अपरिगतानि देवतान्यपि नोचितपरिभवभाञ्जि भवन्ति' इति आमन्त्रयाम्बभूव। विदितामिप्राय इव स इन्द्रायुधो मुहुर्मुहुस्ताडयता क्षितितलं दक्षिणखुरेण तम् आरोहणाय आह्वयन्निव मनोहरम् अकरोत् ह्रेषारवम्।

अथानेन मधुरह्रेषितेन दत्तारोहणाभ्यनुज्ञ इव कुमार आरुरोह तम् इन्द्रायुधम्, यथोचितम् अनन्तरं तुरङ्गमाधिरूढेन चानुगम्यमानो वैशम्पायनेन जय जीवेति च मधुरवचसा मङ्गलप्रायम् अनवरतम् उच्चैः पठता वन्दिजनेन स्तूयमानो नगराभिमुखः प्रतस्थे राजपुत्रः। ततः क्रमेण राजकुलसमीपम् आगम्य राजद्वारं चासाद्य तुरङ्गमाद् अवततार चन्द्रापीडः। अवतीर्य च करतलेन करे वैशम्पायनम् अवलम्ब्य पुरः सविनयं प्रस्थितेन बलाहकेन निर्दिश्यमानमार्गो राजकुलं विवेश। सम्भ्रमोपगतैः कृतप्रणामैश्च प्रतीहारमण्डलैः उपदिश्यमानमार्गो हंसधवलशयनतले निषण्णं पितरं ददर्श। 'आलोकय' इति प्रतीहारवचनानन्तरम् अतिदूरावनतेन चलित-चूडामणिना शिरसा कृतप्रणामम् 'एह्येहि' इति अभिदधानो दूरादेव प्रसारितभुजयुगलः शयनतलाद् ईषदुच्छ्वसितमूर्त्तिः प्रीतिजलापूर्य्यमाणलोचनः समुद्गत-

पुलककण्टकः पिता तं विनयावनतं समालिलिङ्ग। आलिङ्गितोन्मुक्तश्च पितुश्चरणपीठसमीपे चितितले एव निषसाद कुमारः। अनन्तरं निहिते चास्यासने राज्ञा सुतनिर्विशेषम् उपगूढो वैशम्पायनो न्यषीदत्। मुहूर्त्तम् इव स्थित्वा 'गच्छ वत्स, पुत्रवत्सलां जननीम् अभिवाद्य दर्शनलालसा यथाक्रमं सर्वा मातृर्दर्शनेन प्रीणय' इति विसर्जितः पित्रा, सविनयम् उत्थाय राजपरिजनेन चोपदिश्यमानवर्त्मा कुमारः समाययौ राजान्तःपुरम्।

तत्र धवलकञ्चुकावच्छन्नकलेवरैर्बहुभिः समन्तात् परिवृतां शुद्धान्तान्तर्वंशिकैः समुपसृत्य प्रणनाम मातरम्। सा तु तं ससम्भ्रमम् उत्थाप्य सत्यप्याश्वासम्पादनदक्षे पार्श्ववर्त्तिनि परिजने स्वयम् एव कृतावतरणमङ्गला स्नेहाकुलेन हृदयेन अन्तः शुभशतान्यभिध्यायन्ती मूर्धन्युपाघ्राय सुचिरम् आशिश्लेष। अनन्तरं च तथैव कृतयथोचितसमुपचारम् आश्लिष्टवैशम्पायना स्वयम् उपविश्य विनयाद् अवनितले समुपाविशन्तम् आकृष्य बलाद् अनिच्छन्तम् अपि चन्द्रापीडम् आरोपितवती स्वोत्सङ्गम्। ससम्भ्रमपरिजनोपनीतायाम् आसन्द्याम् उपविष्टे च वैशम्पायने चन्द्रापीडं पुनः पुनरालिङ्ग्य ललाटदेशे वक्षसि भुजशिखरयोश्च मुहुर्मुहुः करतलेन परामृशन्ती जननी तम् अवादीत् महिषी विलासवती—"वत्स, कठिनहृदयस्ते जनको येनेयम् आकृतिरीदृशी त्रिभुवनलालनीया

क्लेशम् अतिमहान्तम् इयन्तं कालं लम्भिता। कथम् असि सोढवान् अतिदीर्घाम् इमां गुरुयन्त्रणाम्? अहो बालस्यापि सतः कठोरस्येव ते महद्धैर्य्यम्! अहो विगतशिशुजनक्रीडालाघवम् अर्भकस्यापि ते हृदयम्। अहो गुरुजनस्योपरि भक्तिरसाधारणी!' एवम् अभिधाय लज्जास्मितावनतं कपोले पर्य्यचुम्बद् एनम्। एवं च तत्रापि नातिचिरम् एव स्थित्वा क्रमेण सर्वान्तःपुराणि दर्शनेन नन्दयामास। निर्गत्य च राजकुलद्वारावस्थितम् इन्द्रायुधम् आरुह्य मन्त्रिप्रवरं शुकनासं द्रष्टुम् अयासीत्।

अथ शुकनासगृहद्वारम् आसाद्य सत्वरप्रधावितैः प्रतीहारपुरुषैरनिवार्य्यमाणोऽपि राजपुत्रो बाह्याङ्गन एव तुरङ्गाद् अवततार। द्वारदेशावस्थापिततुरङ्गश्च वैशम्पायनम् अवलम्ब्य पुरःप्रधावितैः समुत्सारित-परिजनैः प्रतीहारजनैरुपदिश्यमानमार्गो द्वितीयमिव राज-कुलं शुकनासभवनं विवेश। प्रविश्य चानेकनरेन्द्रमध्योप-विष्टम् अपरम् इव पितरम् उपदर्शितविनयो दूरावनतेन मौलिना शुकनासं ववन्दे। शुकनासश्च तं सह वैशम्पायनेन प्रेम्णा गाढम् आलिलिङ्ग। आलिङ्गितोन्मुक्तश्च सादरोप-नीतम् अपहाय रत्नासनम् अवनाविव समुपाविशत् कुमारः, तदनु च वैशम्पायनः। समुपविष्टे च राजपुत्रे शुकनास-वजम् अन्यद् अखिलम् अवनिपालचक्रम् उज्झित-निजासनम् अभजत भूतलम्। स्थित्वा च तूष्णीं क्षणम्

इव शुकनासः समुद्गतप्रीतिपुलकैरङ्गैराविद्यमानहृदय-हर्ष-प्रकर्षस्तम् अब्रवीत्—'तात चन्द्रापीड! अद्य खलु देवस्य तारापीडस्य समाप्तविद्यम् उपारूढयौवनम् आलोक्य भवन्तं सुचिराद् उपजाता भुवनराज्यफलप्राप्तिः। अद्य समृद्धाः सर्वा गुरुजनाशिषः। अद्य फलितम् अनेकजन्मान्तरोपात्तम् अवदातं कर्म्म। अद्य प्रसन्नाः कुलदेवताः। न ह्यपुण्यभाजां भवादृशाः सकलभुवन-विस्मयहेतवः पुत्रतां प्रतिपद्यन्ते। क्वेदं वयः, क्वेयम् अमानुषी शक्तिः, क्व चेदम् अशेषविद्याग्रहण-सामर्थ्यम्! अहो धन्याः प्रजा यासां भरत-रामचन्द्रप्रतिमो भवान् उत्पन्नः पालयिता! किं खलु कृतम् अवदातं कर्म्म वसुन्धरया ययासि भर्त्ता समासादितः! सर्वथा कल्प-कोटीर्महावराह इव दंष्ट्रावलयेन वह बाहुना वसुन्धराभारं सह पित्रा' इत्यभिधाय च स्वयम् आभरण-वसन-कुसुमाङ्गरागादिभिरभ्यर्च्य विसर्जयाञ्चकार।

विसर्जितश्चोत्थाय प्रविश्य अन्तःपुरं दृष्ट्वा वैशम्पायन-जननीं मनोरमाभिधानां निर्गत्य समारुह्येन्द्रायुधं पित्रा पूर्व्वकल्पितं भवनं जगाम कुमारः। गत्वा च श्रीमण्डपा-वस्थिते शयने सुहूर्त्तम् उपविश्य सह तेन राजपुत्रलोकेन चकार अभिषेकादिकम् अशनावसानं दिवसविधिम्। अभ्यन्तरे च शयनीयगृह एवाकल्पयत् वासस्थानम् इन्द्रायुधस्य।

———

## पत्रलेखा-परिचयः

अथान्येद्युः प्रभात एव कुमारः सर्वान्तःपुराधिकृतम् अवनीपतेः परमसम्मतम् अनुमार्गागतया च प्रथमे वयसि वर्त्तमानया कन्यकयानुगम्यमानं कैलासनामानं कञ्चुकिनम् आयान्तम् अपश्यत्। स च कृतप्रणामः समुपसृत्य क्षितितलनिहितदक्षिणकरो विज्ञापयामास, 'कुमार, महादेवी समाज्ञापयति—इयं खलु कन्यका महाराजेन पूर्वं कुलूतराजधानीम् अवजित्य कुलूतेश्वर-दुहिता पत्रलेखाभिधाना बालिका सती वन्दीजनेन सहानीय अन्तःपुरचारिकामध्यम् उपनीता। सा मया विगतनाथा राजदुहितेति च समुपजातस्नेहया दुहितृ-निर्विशेषम् इयन्तं कालम् उपलालिता संवर्द्धिता च। तदियम् इदानीम् उचिता भवतस्ताम्बूलकरङ्कवाहिनीति कृत्वा मया प्रेषिता। न चास्याम् आयुष्मता परिजन-सामान्यदृष्टिना भवितव्यम्। बालेव लालनीया, स्व-चित्तवृत्तिरिव चापलेभ्यो निवारणीया, शिष्येव द्रष्टव्या, सुहृदिव सर्वविश्रम्भेष्वभ्यन्तरीकरणीया। दीर्घकाल-संवर्द्धितस्नेहतया स्वसुतायाम् इव हृदयम् अस्याम् अस्ति मे, बलवान् अस्यां पक्षपातः, महाभिजन-राजवंशप्रसूता चार्हतीयम् एवंविधानि कर्म्माणि। नियतं

स्वयम् एव इयम् अतिविनीततया कतिपयैरेव दिवसैः कुमारम् आराधयिष्यति। केवलम् अतिचिरकालोपचिता बलवती मे प्रेमप्रवृत्तिरस्याम् अविदितशीलस्य अस्याः कुमार इति सन्दिह्यते। सर्वथा तथा कल्याणिना प्रयतितव्यम्, यथेयम् अतिचिरम् उचिता परिचारिका ते भवति।' इत्यभिधाय विरतवचसि कैलासे कृताभिजातप्रणामां पत्रलेखाम् अनिमिषलोचनं सुचिरम् आलोक्य चन्द्रापीडो 'यथाज्ञापयति जननी' इत्येवम् उक्त्वा कञ्चुकिनं प्रेषयामास।

पत्रलेखा च ततः प्रभृति दर्शनेनैव समुपजातसेवारसा न दिवा न रात्रौ न सुप्तस्य नासीनस्य नोत्थितस्य न भ्रमतो न राजकुलगतस्य छायेव राजसूनोः पार्श्वं मुमोच। चन्द्रापीडस्यापि तस्यां दर्शनाद् आरभ्य प्रतिक्षणम् उपचीयमाना महती प्रीतिर्जाता। प्रतिदिवसं च अस्याः प्रसादम् अकरोत्, किं बहुना, आत्महृदयाद् अव्यतिरिक्ताम् इव चैनां सर्व्वविस्रम्भेषु मेने।

---

## कुमारचन्द्रापीडस्य यौवराज्याभिषेको दिग्विजययानञ्च

कियत्स्वपि दिवसेष्वतीतेषु महाराजः कुमारस्य चन्द्रापीडस्य यौवराज्याभिषेके मतिम् अकार्षीत्। सन्निकृष्टाभिषेकं दर्शनार्थम् उपागतं राजपुत्रं शुकनास उवाच—'तात, विदितशास्त्रस्य विनयाचारवतो धीरमतेर्भवतो नाल्पम् अप्युपदेष्टव्यम् अस्ति। किन्तु लोकोत्तरा लक्ष्मीर्नयनाभिरामं वपुर्नवं वयः प्रकृष्टा शक्तिरिति महतीयम् अनर्थपरम्परा। एकैकम् अप्येतेषां सर्वाविनयानां स्थानं किं पुनस्तेषां समवायः? लक्ष्मीर्नाम परं पुंसां चेतोविकारकारणम्। हृदयानुप्रवेशिभिर्धूर्तैर्मुखमधुभिरापातरमणीयेषु विषयेषु राजानः प्रवर्त्त्यन्ते। ततः कुमार तथा प्रयतेथा यथा धूर्त्तैर्न वञ्च्यसे, साधुभिर्न निन्द्यसे, कामैश्च न प्रबाध्यसे। कामं भवान् प्रकृत्यैव धीरः, पित्रा च महता प्रयत्नेन समारोपितसंस्कारः, तथापि भवद्गुणसम्पत्सन्तोष एव मां मुखरीकरोति। अयम् एव कालस्तवोपदेशस्य। विरला हि राज्ञाम् उपदेष्टारः। जनकनिवेशितां राज्यधुरां सम्यग् उद्वह' इति।

ततः पुण्येऽह्नि स्नातं विधिवत्कृतमङ्गलं पुत्रं भूपतिः तारापीडो यौवराज्येऽभ्यषिञ्चत्।

अथान्यस्मिन्नहनि पिता युवराजस्य दिग्विजयाय यानम् अनुमेने। विधिज्ञेन पुरोधसा कृतप्रस्थानहोमो विप्रैः कृतस्वस्त्ययनो यत्नरुद्धाश्रया जनन्या कृतप्रस्थानमङ्गलः शङ्ख-दुन्दुभिनिर्घोषमुखरीकृतदिङ्मुखः सूत-मागध-वन्दिभिः स्तवं पठद्भिः स्तुतो युवराजश्चन्द्रापीडः पितरौ मन्त्रिवरं च प्रणम्य निर्जगाम राजभवनात्। बलाहकनिवेदितैः सहस्रेण राजपुत्रैः प्रियवयस्येन वैशम्पायनेन श्वेताश्ववर्त्तिना पत्रलेखया चाश्वतरीनिषण्णयानुगम्यमान आरूढ इन्द्रायुधं शिप्राकूले प्रकल्पितं चित्रम् उच्छ्रिततोरणं निवासम् अध्यास्त। तत उन्नतान्नमयन्नानतान् परिपालयन् कांश्चिद् अवशान् उत्खनन्नुत्खातान् प्रतिरोपयन् संरक्षन् शरणागतान् विप्रेभ्यो ग्रामान् ददत् वर्षत्रितयेन समग्राम् अर्णवावधिं वसुन्धरां बभ्राम।

तत उत्तरस्यां दिशि हेमजटाख्यानां किरातानां निकेतनं सुवर्णपुरं जित्वा कैलासपरिसरायां नितान्तरम्यायां भूमौ दिग्विजयश्रान्तः कियतोऽपि वासरान् अयापयत्। एकदा तु मृगयां कुर्वन् हठात् किन्नरमिथुनम् अदर्शत् कुमारः। अश्वमुखं तन्मिथुनम् आलोक्यादित्सुः कौतुकेन वाजिनम् इन्द्रायुधम् अचालयत्। अपूर्वपुरुषालोकत्रासात् कन्दरं प्रविष्टुकामौ तौ दम्पती महता

वेगेन गिरिशिखरम् आरूढौ परोक्षौ बभूवतुः। तत उत्सृज्य तद्ग्रहणाकाङ्क्षां समाकृष्य च वल्गां श्रमस्वेदार्द्र-विग्रहं श्वसन्तं तुरङ्गम् आलोक्य आत्मानञ्च स्वगणभ्रष्टम् उपलभ्य, मानुषाणाम् अगम्यं तं प्रदेशं विनिर्णयन् सानुतापम् अचिन्तयत्—'अहो मेऽस्थानेऽभिनिवेशः। बालिशेनेव मया व्यर्थम् आयासित आत्मा। को वा मेऽर्थः किन्नरमिथुनग्रहणेनाग्रहणेन वा? धावता मया नैव पन्था लक्षितः। पर्णतृणाकीर्णे वने वाजिनः पादमुद्राश्च न स्युः। केवलं दक्षिणाम् आशाम् उद्दिश्य यथा तथा गन्तव्यम्' इति।

अतिश्रमेण तृषार्त्तः पानीयम् अन्विष्यन् वनम् ऐक्षत। ततश्च वनमध्ये महत् सरः आलोकयामास। ततो हयम् कृत्वा अपनीतपर्य्याणं सलिलं पाययित्वा तरुतले संयम्यासि-लूनानि तृणानि तस्याग्रे न्यक्षिपत्। स्वयं च कृतस्नानः पीत्वा पानीयं भुक्त्वा च विसकन्दलीः उत्तरीयोपधानः शिलातले निषसाद। अथ सरस उत्तरस्मिंस्तटेऽमानुषं गीतध्वनिं शुश्राव। कुतोऽत्र विजने वने गीतम् इत्युद्भूत-विस्मयश्चन्द्रापीड उत्थाय ताम् एव दिशम् अभ्यगात्। किञ्चिदन्तरं गत्वा स्फाटिकम् ऐक्षत प्रासादम्। तत्र रत्नपीठप्रतिष्ठितं देवं चराचरगुरुम् उमाकान्तं त्र्यम्बकम् आलोक्य प्रणनाम। तस्य च दक्षिणतो विहितासनां कलस्वनाम् उत्सङ्गनिहितां वीणां वादयन्तीं नवेऽपि

वयसि प्राप्तवैराग्याभ्यासवासनां धृतपाशुपतव्रतां काञ्चित् कुलगौरीम् अपश्यत् कन्यकाम्। तां दृष्ट्वा विस्मयाविष्ट-चेता: कुमारश्चन्द्रापीड: 'केयं कन्यका, न मे संगीतिरस्या दिव्यतां प्रति' इति चिन्तयन् गीतावसानसमयं प्रतीक्षमाण: स्तम्भाच्छादितविग्रह आस्त।

सा च कन्या गीतिं नीत्वा समाप्तिं विनिधाय वल्लकीं प्रदक्षिणीकृत्य प्रणम्य च भगवन्तं चन्द्रचूडं चन्द्रापीडम् अभाषत—

'स्वागतम् अतिथये। कथम् इमां भूमिम् अनुप्राप्तो महाभाग:? तद् उत्तिष्ठ, आगम्यताम्, अनुभूयताम् अतिथिसत्कार:' इति। एवम् उक्तस्तु तया सम्भाषण-मात्रेणैवानुगृहीतम् आत्मानं मन्यमान उत्थाय भक्त्या कृतप्रणामो 'भगवति, यथाज्ञापयसि' इत्यभिधाय दर्शित-विनय: शिष्य इव तां व्रजन्तीम् अनुवव्राज। तत: प्रविश्य गुहां निजां सा कन्या मृगाजिने समुपविश्य दर्भासनासीनं राजपुत्रम् आगमनकारणादिकं पुन: पप्रच्छ। सोऽपि यथावृत्तं सर्वम् आचचक्षे। विदितवृत्तान्ता बहिर्गत्वा तरूणाम् अध: क्षणं स्थित्वा स्वयंविशीर्णै: फलैरापूर्य्य भिक्षापात्रं प्रत्यागम्य कुमारं तदुपयोगाय न्ययुङ्क्त। कृताहारे च तस्मिन् सापि फलाहारक्रियाम् आचरत्। अथ तस्या: प्रशममधुराकृतिं दाक्षिण्यं भावशुद्धिं च विलोक्य कुमार: सविनयम् अवादीत्—भगवति, त्वत्प्रसादकृतैनेव

मानुषतासुलभेन प्रागल्भ्येन मम मनः प्रश्नचापले नियुज्यते। तद् यदि न रहस्यं न वातिखेदकरम् इव ततस्त्वद्वृत्तान्तश्रवणेनात्मानम् अनुग्राह्यम् इच्छामि। अति महत् खलु भवद्दर्शनात् प्रभृति मे कौतुकम् अस्मिन् विषये। कतरत् मरुताम् ऋषीणां गन्धर्वाणां गुह्यकानाम् अप्सरसां वा कुलम् अनुगृहीतं भगवत्या जन्मना? किमर्थं वास्मिन् कुसुमसुकुमारे नवे वयसि व्रतग्रहणम्? क्वेदं वयः, क्वेदं तपः, क्वेयम् आकृतिः, क्व चायम् लावण्यातिशयः, क्वेयम् इन्द्रियाणाम् उपशान्तिः? तद् अद्भुतम् इव मे प्रतिभाति। किं निमित्तं वानेकसिद्धसाध्यसंबाधानि सुरलोकसुभगान्यपहाय दिव्याश्रमपदानि एकाकिनी वनम् इदम् अमानुषम् अधिवससि? कश्चायं प्रकारो यत् तैरेव पञ्चभिर्महाभूतैरारब्धम् ईदृशीं धवलतां धत्ते त्वदीयं शरीरम्? नेदम् अस्माभिरन्यत्र दृष्टपूर्व्वम्। अपनयतु नः कौतुकम्, आवेदयतु भवती सर्व्वम्।'

इत्येवम् अभिहिता सा किमपि हृदि ध्यायन्ती तूष्णीं मुहूर्त्तमिव स्थित्वा निःश्वस्य स्थूलस्थूलैरन्तर्गतां हृदयशुद्धिम् इवादाय निर्गच्छद्भिरिन्द्रियप्रसादम् इव वर्षद्भिस्तपोरसनिस्यन्दम् इव स्रवद्भिर्लोचनविषयं धवलिमानम् इव द्रवीकृत्य पातयद्भिरच्छाच्छैः अमलकपोलस्थलस्खलितैः अवशीर्णहारमुक्तामुक्ताफलतरलपातैः अनुबद्धविन्दुभिरश्रुभिरामीलितलोचना निःशब्दं रोदितुम् आरेभे।

तां च प्ररुदितां दृष्ट्वा चन्द्रापीडस्तत्क्षणम् अचिन्तयत् —'अहो ! दुर्निवारता व्यसनोपनिपातानां यद् ईदृशीम् अपि दिव्याकृतिम् आत्मसात् कुर्व्वन्ति। न ह्यल्पीयसा शोककातरेणैवंविधा महानुभावा आकृतयोऽभिभूयन्ते' इति।

---

# बृहत्-कथा

## नागार्जुन-कथा

अभूत् पुरा चिरायुरभिधाने नगरे चिरायुर्नाम भूपतिः केतनं सर्वसम्पदाम्। बोधिसत्त्वांशसम्भवो दयालुर्दानशीलो विज्ञानवान् नागार्जुनो नाम तस्य मन्त्री बभूव, यः सर्वौषधियुक्तिज्ञः सिद्धरसायनस्तं नृपम् आत्मानम् च विजरौ चिरजीवितौ चाकार्षीत्।

अथ कदाचित् तस्य मन्त्रिप्रवरस्य नागार्जुनस्य सर्वेषु तनुजेषु प्रेष्ठो बालोऽपि पञ्चत्वम् आययौ। शोकसन्तप्तोऽसौ मर्त्यानां मृत्युशान्तये तपोदानप्रभावतो विविधैर्द्रव्यैरमृतं स्र ुम् उपचक्रमे। शिष्टस्यैकस्यौषधस्य मेलनाय यावद् उचि कालयोगम् प्रत्यैक्षत तावत् महेन्द्रेण सर्वं तच्चिकीर्षितम् अबुध्यत। ततो देवेन्द्रः सुरैर्मन्त्रं कृत्वा देवभिषजौ दस्र-नासत्यौ एवम् आदिशत्—'भुवि नागार्जुनं गत्वा ब्रूतम् इदं मद्वचनात्—मन्त्रिणापि सता कोऽयम् अनयः कर्त्तुम् आरब्धो भवता? किं त्वं साम्प्रतं प्रजापतिम् अपि जेतुम् उद्यतोऽसि? ये मर्त्यास्तेन मृत्युधर्माणो विहितास्त्वम् अमृतं साधयित्वा

तानमरान् कर्त्तुम् इच्छसि? एवं कृते देव-मानुषयोर्विशेषः को भवेत्? यष्टव्य-याजकाभावाच्च भज्येत जगत्-स्थितिः। तस्मात् संहरामृतसाधनम् एतत्। नो चेत् कुपिता देवा ध्रुवं दास्यन्ति शापम्। यच्छोकाच्च यत्न एष महान् क्रियते भवता स ते सुतः स्वर्गे स्थितो भुङ्क्ते महत् सुखम्' इति। एवं सन्दिश्य शक्रोऽश्विनौ प्रजिघाय। समागत्य च तौ नागार्जुनात् पूजां लब्ध्वा तस्मै देवराज-सन्देशम् ऊचतुः।

ततो नागार्जुनो विषण्णोऽचिन्तयत्—'न करोमि चेत् देवराजशासनम् आसतां तावद्देवा इमावश्विनावेव किं मे न प्रयच्छतो दारुणम् अभिशापम्? तद् आस्ताम् एषा-मृतसिद्धिः, मम पुत्रश्च गतोऽशोच्यां गतिं सुकृतैरात्मनः।' एवम् आलोच्य स्थिरमतिरसौ नागार्जुनोऽब्रूत तौ दस्रौ—'एषोऽहं संहरामि त्रिलोकीपतेरादेशाद् मदीयाम् अमृत-क्रियाम्। युवां नागमिष्यतं चेत् तर्हि पञ्चाहेनामृते सिद्धे पृथिवी मयाजरामरा कृताभविष्यत्' इति। इत्युक्त्वा तयोः समक्षम् एव धरण्यां सिद्धप्रायम् अमृतं निचखान स नागार्जुनः। तत आपृच्छ्य तम् दस्रौ गत्वा च शक्रम् आचख्यतुः कार्य्यं तस्मै।

अथ राजा चिरायुः पुत्रं जीवहरं नाम यौवराज्येऽभ्यषिञ्चत्। अभिषिक्तं तं प्रणामार्थम् उपागतं सुतम् आलोक्य माता धनपराभिधाना प्रोवाच—'आयुष्मन्,

किं मुधा हृष्यसि प्राप्य यौवराज्यम्। बहवस्ते भ्रातरः तादृशं प्राप्य यौवराज्यं मृताः, न च केनापि प्राप्तं राज्यम्। दत्तं रसायनं ते पित्रे नागार्जुनेन येनाधुनासौ अष्टौ शतं च वर्षाणि समतीत्यापि जीवति ते पिता। कियन्त्यन्यानि वर्षाणि जीविष्यन्तीति को जानाति? तत् यदि राज्येन तेऽर्थ-स्तर्हि कुरुष्वैवम् उपायम्—मन्त्री नागार्जुनो विहिताह्निक आहारकाले प्रत्यहम् इमाम् उद्घोषणां करोति—कोऽर्थी किं प्रार्थयते इति। "स्वशिरो मे प्रयच्छे"ति तं गत्वा तत्काले ब्रूहि। सत्यवाचि छिन्नमूर्ध्नि मृते तस्मिन् तव पितापि तच्छोकात् पञ्चत्वं यायात् वनं वा समाश्रयेत्। ततस्त्वं प्राप्स्यसि राज्यम्, नास्त्यत्रोपायान्तरम्' इति।

मातुर्वचनात् कुमारः परेद्युर्भोजनवेलायां नागार्जुनस्य गृहमागत्य कः किं याचत इति वदन्तं मन्त्रिणं मूर्द्धानम् अयाचत। 'वत्स, आश्चर्यमेतत्, किं करिष्यसि त्वं मच्छिरसा, क्वोपयुज्यते मांसास्थिकेशसङ्घ एषः? तथापि यद्यनेन तवार्थस्तर्हि छित्त्वा शिरो गृहाण' इत्युक्त्वा मन्त्रिवरः तस्मै शिरोधराम् उपानयत्। रसायनदृढायां च तस्यां शिरोधरायां चिरं प्रहरतो राजपुत्रस्य बहवः खण्डशः कृताः खड्गाः। एतद् बुद्ध्वा चिरायुर्नृपतिरागत्य शिरो-दानाद् नागार्जुनं यदा न्यवारयत् तदा स महात्मा अब्रवीत् —'जातिस्मरोऽहं भूपाल, नवाधिकां नवतिं जन्मानि दत्तं मया स्वशिरः। शिरोदानायेदं मे शततमं जन्म, तत्

मास्म वोचः किञ्चित्। न कोऽप्यर्थी मत्तो विमुखो याति, तदिदानीं त्वत्पुत्राय ददामि स्वशिरः। त्वन्मुखावलोकनायैव विलम्ब एष कृतो मया' इति। एवम् उक्त्वा नृपतिम् आश्लिष्य कोषतश्चूर्णमादाय तेन राजपुत्रस्य कृपाणं व्यलिपत्। ततः कृपाणप्रहारेण राजकुमारः चिच्छेद नागार्जुनस्य मस्तकम्।

प्राणत्यागोन्मुखे नृपे गगनाद् उदचरत् वाग् अशरीरिणी—'राजन्, अकार्य्यं मा कृथाः, एष ते सखा नागार्जुनोऽशोच्यः संवृत्तो यतोऽयम् अपुनर्जन्मा बुद्धसमां गतिं प्राप्तः' इति। एतच्छ्रुत्वा स नृपो विरम्य मरणव्यवसायात् शुचा त्यक्त्वा राज्यम् आश्रिश्राय वनम्, तत्पुत्रो जीवहरो राज्यम् अधितष्ठौ।

---

# उपमितिभवप्रपञ्चा कथा

## नन्दिवर्द्धनस्य यौवनप्राप्तिर्मित्रलाभश्च[1]

इतश्च निःशेषितं मया कलाग्रहणम्, ततो गणितं प्रशस्तदिनम्, आनीतोऽहं कलाशालायास्तातेनात्म-समीपम्। पूजितः कलाचार्य्यः, दत्तानि महादानानि, कारितो महोत्सवः। अभिनन्दितोऽहं तातेनाम्बाभिः शेषलोकैश्च, वितीर्णो मे पृथगावासकः; यथासुख-मास्तामेष इति कृत्वा तातेन नियुक्तः परिजनः, समुपहृतानि मे भोगोपभोगोपकरणानि, स्थितोऽहं सुरकुमारवल्ललमानः[2]।

ततस्त्रिभुवनविलोभनीयोऽमृतरस इव सागरस्य, सकललोकनयनानन्दजननश्चन्द्रोदय इव प्रदोषस्य, बहु-रागविकारभङ्गुरः सुरचापकलाप इव जलधरसमयस्य,

---

[1] तृतीयप्रस्तावे, २४१-४२ पृष्ठानि। (Peterson's edition.)

[2] 'ललमानः' विलसनशील इत्यर्थः। "ताच्छील्यवयोवचनशक्तिषु चानश्" इति चानश्।

मकरध्वजायुधभूतः कुसुमप्रसव इव कल्पपादपस्य, अभिव्यज्यमानरागरमणीयः सूर्य्योदय इव कमलवनस्य, विविधलास्यविलासयोग्यः कलाप इव शिखण्डिनः प्रादुर्भूतो मे यौवनारम्भः।

इतश्च स्वभवनान्त्रिसन्ध्यं व्रजामि स्माहं राजकुले गुरूणां पादवन्दकः, ततोऽन्यदागतः प्रभाते, कृतं तातस्याम्बादीनाञ्च पादपतनम्, अभिनन्दितस्तैराशीर्वादेन, स्थितस्तत्समीपे कियन्तमपि चणम्। समागतः स्वभवने, निविष्टो विष्टरे, यावदकाण्ड एवोल्लसितो राजकुले बहलः कलकलः; ततः किमेतदित्यलचिततन्निमित्ततया जातो मे सम्भ्रमः। प्रस्थितस्तदभिमुखम्, यावत्तूर्णमागच्छन्नालोकितो मया धवलाभिधानः सबलो बलाधिकृतः; प्राप्तो मदन्तिकम्, प्रणतोऽहमनेन, आह चासौ—

'कुमार, देवः समादिशति, "यदुतेतो निर्गतमात्रस्य ते प्रविष्टो मत्समीपे दूतः, निवेदितं च तेन यथा कुशावर्त्तपुरात् कनकचूडराजसूनुः कनकशेखरो नाम राजकुमारो जनकापमानाभिमानात् भवत्समीपमागतो गव्यूतिमात्रवर्त्तिनि मलयनन्दने कानने तिष्ठति; एतदाकर्ण्य देवः प्रमाणम्" इति। ततोऽहं स्वगृहागततया प्रत्यासन्नबन्धुतया महापुरुषतया च प्रत्युद्गमनमर्हति कनकशेखरः कुमार इत्याख्यानस्थायिभ्यो राजवृन्देभ्यः प्रख्याप्य, एष समुच्चलितः स्वयं तदभिमुखम्; कुमारेणापि

शीघ्रमागन्तव्यमित्यहं प्रहितो युष्मदाह्वानाय, तत्क्षणं प्रस्थातुमर्हति कुमारः।'

ततो 'यदाज्ञापयति तातः' इति ब्रुवाणश्चलितोऽहं सपरिकरः, मिलितस्तातबले, पृष्टो मया धवलः, 'कथमेष कनकशेखरोऽस्माकं बन्धुः?' इति। धवलेनाभिहितम्, 'यतो नन्दायाः कनकचूडः सहोदरो भवति, तेन ते मातुलसूनुरेष भ्राता' इति। प्राप्तास्तत्समीपम्; कृतं कनकशेखरेण तातस्य पादपतनम्, समालिङ्गितस्तातेन मया च। कृतोचिता प्रतिपत्तिः, प्रवेशितो नगरे महानन्दविमर्द्देन।

अभिहितश्च तातेनाम्बया च कनकशेखरः, यथा— 'कुमार, सुन्दरमनुष्ठितम्, यदात्मीयवदनकमलदर्शनेन जनितोऽस्माकं मनोरथानामप्यगम्यो महांश्चित्तानन्दः; तदेतदपि कुमारस्य पैतृकमेव राज्यम्, तस्मादत्र कुमारेण तिष्ठता विकल्पो विधेयः' इति।

अभिनन्दितं तातांम्बावचनं कनकशेखरेण; समर्पित-स्तातेन मदीयभवनाभ्यर्णवर्त्ती कनकशेखरस्य महाप्रासादः। स्थितस्तत्रासौ; जातोऽस्य मया सह स्नेहभावः, समुत्पन्नो विस्रम्भः।

---

# दशकुमारचरितम्

## कुमारोत्पत्तिः

[ पूर्वपीठिका—प्रथम उच्छ्वासः ]

अस्ति समस्तनगरीनिकषायमाणा मगधदेशशेखरीभूता[1] पुष्पपुरी नाम नगरी। तत्र रचितदिगन्तरालपूर्त्या कीर्त्याभितः सुरभितः विरचितारातिसन्तापेन प्रतापेन सतततुलितवियन्मध्यहंसो राजहंसो नाम हृद्यनिरवद्यरूपो भूपो बभूव। तस्य वसुमती नाम सुमतिर्लीलावती कुलशेखरमणी रमणी बभूव।

तस्य राज्ञः परमविधेया धर्म्मपाल-पद्मोद्भव-सितवर्म्मनामधेयाः कुलामात्यास्त्रयोऽभूवन्। तेषां सितवर्म्मणः सुमति-सत्यवर्म्माणौ, धर्म्मपालस्य सुमन्त्र-सुमित्र-कामपालाः, पद्मोद्भवस्य सुश्रुत-रत्नोद्भवाविति तनयाः समभूवन्। तेषु धर्म्मशीलः सत्यवर्म्मा संसारासारतां बुद्ध्वा तीर्थयात्राभिलाषी

---

[1] शिरोभूषणभूता।

देशान्तरमगमत्; दुर्व्विनीतः कामपालो जनकाग्रजन्मनोः शासनमतिक्रम्य भुवं बभ्राम; रत्नोद्भवोऽपि वाणिज्यनिपुणतया पारावारतरणमकरोत्; इतरे मन्त्रिसूनवः पुरन्दरपुरातिथिषु पितृषु यथापूर्व्वमन्वतिष्ठन्।

ततः कदाचिन्मगधनायको मालवेश्वरं प्रत्यग्रसंग्रामघस्मरं समुत्कट-मानसारं मानसारं प्रति चतुरङ्गबलेन संयुतः संग्रामाभिलाषेण रोषेण महताविष्टो निर्य्ययौ। मालवनाथोऽप्यनेकानेकपयूथसनाथो विग्रहः सविग्रह इव साग्रहोऽभिमुखीभूय भूयो निर्जगाम। तयोरथ रथतुरगखुरक्षुण्णक्षोणीसमुद्भूते करिघटाकटस्रव[1]-न्मदधाराधौतमूले वियत्तलव्याकुले धूलिपटले शस्त्राशस्त्रि[2] हस्ताहस्ति परस्पराभिहतसैन्यं जन्यमजनि। तत्र मगधराजः प्रक्षीणसकलसैन्यमण्डलं मालवराजं जीवग्राहमभिगृह्य[3] कृपालुतया पुनरपि स्वराज्ये प्रतिष्ठापयामास।

---

[1] "करिणां घटानां घटा" इति कोषात् घटाशब्देनैव गतार्थत्वे पुनः करिशब्दोपादानं करिकलभादिवद् बोध्यम्।

[2] शस्त्रैः शस्त्रैश्च प्रहृत्येदं युद्धं प्रवृत्तमिति 'शस्त्राशस्त्रि', हस्तैः हस्तैश्च प्रहृत्येदं युद्धं प्रवृत्तमिति 'हस्ताहस्ति'; 'तत्र तेनेदम्' इति बहुव्रीहिः; 'इच् कर्म्मव्यतिहारे' इति समासान्त इच्, 'अन्येषामपि दृश्यते' इति दीर्घः।

[3] जीवग्राहम्—जीवन्तमेव गृहीत्वा; 'समूलाकृतजीवेषु हन्कृञ्ग्रहः' इति णमुल्, 'कषादिषु यथाविध्यनुप्रयोगः' इत्यनुप्रयोगः।

ततः स रत्नाकरमेखलामिलाम्[1] अनन्यशासनां शासदनपत्यतया सकललोकैककारणं नारायणं निरन्तरमर्चयामास। अथ कदाचित् तदग्रमहिषी 'देवप्रसादेन कल्पवल्लीफलमाप्नुहि' इति प्रभातसमये सुखस्वप्नमवलोकितवती। सा तदा दयितमनोरथपुष्पभूतं गर्भमधत्त। राजापि सम्पन्नाक्रन्दिताखण्डलः सुहृन्नृपमण्डलं समाहूय निजसम्पन्मनोरथानुरूपं देव्याः सीमन्तोत्सवं[2] व्यधत्त।

एकदा सुहृन्मित्रपुरोहितैः सभार्यां सिंहासनासीनो गुणैरहीनो राजहंसो ललाट-तट-न्यस्ताञ्जलिना द्वारपालेन व्यज्ञापि, 'देव, देवसन्दर्शन-लालसमानसः कोऽपि यतिर्द्वारदेशमध्यास्ते' इति। तदनुज्ञातेन तेन स संयमी नृपसमीपमानायि। आयान्तं तं विलोक्य, सम्यग्ज्ञाततदीयगूढचारभावो निखिलमनुचरनिकरं विसृज्य, मन्त्रिजनसमेतः प्रणतमेनं समन्दहासमभाषत, 'ननु तापस, देशं सापदेशं[3] भ्रमन् भवांस्तत्र तत्र भवदभिज्ञातं कथयतु' इति।

---

[1] 'रत्नाकरः' सागरः 'मेखला' कटिसूत्रं यस्यास्ताम्; इलाम्—पृथिवीम्।

[2] सीमन्तोन्नयनसंज्ञः संस्कारस्तदानुषङ्गिकमुत्सवम्। तथा चाश्वलायनः—'चतुर्थे गर्भमासे सीमन्तोन्नयनम्' इति।

[3] सापदेशम्—सव्याजम्। तापसादिवेषैः सर्वत्र लब्धप्रवेशः सन् गूढचरः परराष्ट्रगूढवृत्तान्तान् विदित्वा स्वामिने निवेदयति।

तेनाभाषि भूभ्रमणवलिना प्राञ्जलिना, 'देव, शिरसि देवस्याज्ञामादायैनं निर्दोषं वेषं स्वीकृत्य मालवेन्द्रनगरं प्रविश्य तत्र तत्र गूढतरं वर्त्तमानस्तस्य राज्ञः समस्तमुदन्त[1]जातं विदित्वा प्रत्यागमम्। मानी मानसारः स्वसैनिकायुषत्तान्तराये[2] सम्पराये[3] भवतः पराजयमनुभूय वैलक्ष्यलक्ष्यहृदयो[4] वीतदयो महाकालनिवासिनमनश्वरं[5] महेश्वरं समाराध्य तपःप्रभावसन्तुष्टादस्माद् एकवीरारातिघ्नीं भयदां गदां लब्ध्वात्मानमप्रतिभटं मन्यमानो महाभिमानो भवन्तमभियोक्तुमुद्युङ्क्ते। ततः परं देव एव प्रमाणम्'[6] इति।

तदालोच्य निश्चिततत्कृत्यैरमात्यै राजा विज्ञापितोऽभूत्, 'देव, दैवसहायेन योद्धुमरातिरायाति, तस्मादस्माकं युद्धं साम्प्रतमसाम्प्रतम्[7]; सहसा दुर्गसंश्रयः कार्य्यः' इति। तैर्बहुधा विज्ञापितोऽप्यखर्व्वेण गर्व्वेण विराजमानो राजा तद्वाक्यमकृत्यमित्यनादृत्य प्रतियोद्धुमना

---

[1] उदन्तः—वार्त्ता। "वार्त्ता प्रवृत्ति र्वृत्तान्त उदन्तः स्यात्" इत्यमरः।

[2] 'स्वसैनिकाः' निजभटास्तेषा'मायुष्मत्ता' जीवितमर्य्यादा तस्याः 'अन्तरायो' विघ्नभूतस्तस्मिन्। [3] सम्पराये—युद्धे।

[4] 'वैलक्ष्येण' दैन्येन 'लक्ष्यम्' आक्रान्तं 'हृदयं' यस्य सः, विषादाभिभूतचित्त इत्यर्थः।

[5] नाशरहितम्। [6] किंकर्त्तव्यतानिर्णेता।

[7] साम्प्रतम्—अधुना; असाम्प्रतम्—अयुक्तम्।

बभूव। शितिकण्ठ[1]-दत्तशक्तिसारो मानसारो योद्धुमनसामग्रोभूय सामग्रीसमेतोऽक्लेशं मगधदेशं प्रविवेश।

तदा तदाकर्ण्य मन्त्रिणो भूमहेन्द्रं मगधेन्द्रं कथञ्चिदनुनीय, रिपुभिरसाध्ये विन्ध्याटवीमध्येऽवरोधान् मूलबलरचितान् निवेशयामासुः ; राजहंसस्तु प्रशस्तवीतदैन्यसैन्यसमेतस्तीव्रगत्या निर्गत्याधिकरुषं द्विषं रुरोध। परस्परबद्धवैरयोरेतयोः शूरयोस्तदा तदालोकनकुतूहलागतगगनचराश्चर्यकारणे रणे वर्त्तमाने जयाकाङ्क्षी मालवदेशरत्नो समरतुलितामरेश्वरस्य मगधेश्वरस्य तस्योपरि पुरारातिदत्तां गदां प्राहिणोत्। निशितशरनिकरशकलीकृतापि सा पशुपतिशासनस्यावन्ध्यतया सूतं निहत्य, रथस्थं राजानं मूर्च्छितमकार्षीत्। ततो वीतप्रग्रहा अक्षतविग्रहा वाहा रथमादाय, दैवगत्यान्तःपुरशरण्यं महारण्यं प्राविशन्। मालवनाथो जयलक्ष्मीसनाथो मगधराज्यं प्राज्यं समाक्रम्य पुष्पपुरमध्यतिष्ठत्।

तत्र हेतितततिहतिश्रान्ता अमात्या दैवगत्यानुत्क्रान्तजीविता निशान्तवातलब्धसंज्ञाः कथञ्चिदाश्वस्य, राजानं समन्तादन्विष्यानवलोकितवन्तो दैन्यवन्तो देवीमवापुः। वसुमती तु तेभ्यो निखिलसैन्यक्षतिं राज्ञोऽदृश्यत्वं

---

[1] 'शिति'र्नीलः 'कण्ठो' यस्य सः ; 'शितिकण्ठः' शिवस्तेन 'दत्ता' या 'शक्तिः' प्रहरणविशेषः, स एव 'सारः' बलं यस्य सः।

चाकर्ण्योद्विग्ना शोकसागरमग्ना रमणानुगमने मतिं व्यधत्त। 'कल्याणि, भूरमणमरणमनिश्चितम्; किं च दैवज्ञकथितो मथितोद्धताराति: सार्वभौमोऽभिरामो भविता सुकुमार: कुमारस्त्वदुदरे वसति, तस्मादद्य तव मरणमनुचितम्' इति भूषितभाषितैरमात्यपुरोहितैरनुनीयमानया तया क्षणं क्षणहीनया तूष्णीमस्थायि।

अथार्द्धरात्रे निद्रानिलीढनेत्रे परिजने विजने शोकपारावारमपारमुत्तर्त्तुमशक्नुवती सेनानिवेशदेशं नि:शब्दलेशं शनैरतिक्रम्य, यस्मिन् रथस्य संसक्ततया तदानयनपलायनपरिश्रान्ता गन्तुमक्षमा: क्षमापतिरथ्या: पथ्याकुला: पूर्व्वमतिष्ठन्, तस्य निकटवटतरो: शाखायां क्वचिदुत्तरीयार्द्धेन बन्धनं मृतिसाधनं विरचय्य मर्त्तुकामाभिरामा[1] वाङ्माधुरीविरसीकृत-कलकण्ठा साश्रुकण्ठा व्यलपत्, 'लावण्योपमितपुष्पसायक भूनायक, भवानेव भाविन्यपि जन्मनि वल्लभो भवतु' इति।

तदाकर्ण्य नीहारकरनिकरसम्पर्क-लब्धावबोधो मायधोऽगाधरुधिरक्षरणनष्टचेष्टो देवीवाक्यमेव निश्चिन्वानस्तन्वान: प्रियवचनानि शनैस्तामाह्वयत्। सा, ससम्भ्रममागत्य, अमन्दहृदयानन्दसंफुल्लवदनारविन्दा तमुपोषिताभ्यामिवानिमिषिताभ्यां लोचनाभ्यां पिबन्ती, विकस्वरेण

[1] मर्त्तुं कामो यस्या: सा; "तुं काममनसोरपि" इत्यनुस्वारलोप:।

स्वरेण पुरोहितामात्यजनमुख्यैराहूय तेभ्यस्तमदर्शयत्। राजा निटिलतटचुम्बितनिजचरणाम्बुजैः[1] प्रशंसितदैवमाहात्म्यैरभाषि, 'देव, रथ्यचयः[2] सारथ्यपगमे रथं रभसादरण्यमनयत्' इति। 'तत्र निहतसैनिकग्रामे संग्रामे मालवपतिनाराधितपुरारातिना प्रहितया गदया दयाहीनेन ताडितो मूर्च्छामागत्यात्र वने निशान्तपवनेन बोधितोऽभवम्' इति महीपतिरकथयत्।

ततो विरचितमहेन मन्त्रिनिवहेन विरचितदैवानुकूल्येन कालेन शिबिरमानीयापनीताशेषशल्यो विकसितनिजाननारविन्दो राजा सहसा विरोपितव्रणोऽकारि। विरोधिदैवधिक्कृतपुरुषकारो दैन्यव्याप्ताकारो मगधाधिपतिरधिकाधिरमात्यसम्मत्या मृदुभाषितया तया वसुमत्या समबोधि, 'देव, सकलस्य भूपालकुलस्य मध्ये तेजोवरिष्ठो गरिष्ठो भवानद्य विन्ध्यवनमध्यं निवसतीति जलबुद्बुदसमाना विराजमाना सम्पत् तडिल्लतेव सहसैवोदेति नश्यति च; तन्निखिलं दैवायत्तमेवावधार्य्य कार्य्यम्। किं च, पुरा हरिश्चन्द्ररामचन्द्रमुख्या असंख्या महीन्द्रा ऐश्वर्य्योपमितमहेन्द्रा दैवतन्त्रं दुःखयन्त्रं सम्यगनुभूय,

---

[1] 'निटिलतटेन' भालस्थलेन 'चुम्बितं' स्पृष्टं 'निजचरणाम्बुजं' यैः तैः; "गोधिर्ललाटमलिकं निटिलं भालमर्धकम्।" इति पञ्चतत्त्वप्रकाशः।

[2] रथ्यचयः—अश्वसमुदायः।

पश्चादनेककालं निजराज्यमकुर्वन्; तद्वदेव भवान् भविष्यति, कञ्चन कालं विरचितदैवसमाधिर्गताधिस्तिष्ठतु[1] तावत्' इति।

ततः सकलसैन्यसमन्वितो राजहंसस्तपोविभ्राजमानं वामदेवनामानं तपोधनं निजाभिलाषावाप्तिसाधनं जगाम। तं प्रणम्य तेन कृतातिथ्यस्तस्मै कथितकथ्यस्तदाश्रमे दूरीकृतश्रमे कञ्चन कालमुषित्वा निजराज्याभिलाषी मितभाषी सोमकुलावतंसो राजहंसो मुनिमभाषत, 'भगवन्, मानसारः प्रबलेन दैवबलेन मां निर्जित्य मद्भोग्यं[2] राज्यमनुभवति, तद्वदहमप्युग्रं तपो विरचय्य तमरातिमुन्मूलयिष्यामि लोकशरण्येन भवत्कारुण्येनेति नियमवन्तं भवन्तं प्राप्नवम्' इति।

ततस्त्रिकालज्ञस्तपोधनो राजानमवोचत्, 'सखे, शरीरकार्श्यकारिणा तपसालम्; वसुमतीगर्भस्थः

---

[1] 'विरचितः' अनुष्ठितः 'दैवसमाधिः' दैवाराधनादिनियमो येन सः; दैवानुकूल्यलाभाय दैवाराधनादिव्रतपरायणः सन्। "समाधिर्नियमे ध्याने" इति विश्वः। गताधिः—गतः आधिर्मनोव्यथा यस्य सः। "पुंस्याधिर्मानसी व्यथा" इत्यमरः।

[2] अयमेव पाठो बहुसम्मतः स्वारसिकश्च। पूर्व्वपीठिकाकारेण शब्दालङ्कारव्यसनितया बहुधैव गृहीतश्चेदं समुज्झितं व्याकरणानुशासनम्। अत भोग्यमित्येवोचितम्।

सकलरिपुकुलमर्द्दनो राजनन्दनो नूनं सम्भविष्यति, कञ्चन कालं तूष्णीमास्स्व।' गगनचारिण्यापि वाण्या 'सत्यमेतत्' इति तदेवावोचि। राजापि मुनिवाक्यमङ्गीकृत्यातिष्ठत्।

ततः सम्पूर्णगर्भदिवसा वसुमती सुमुहूर्त्ते सकललक्षणलक्षितं सुतमसूत। ब्रह्मवर्चसेन[1] तुलितवेधसं पुरोधसं पुरस्कृत्य कृत्यविन्महीपतिः कुमारं जातसंस्कारेण[2] बालालङ्कारेण च विराजमानं राजवाहननामानं व्यधत्त। तस्मिन्नेव काले सुमति-सुमन्त्र-सुमित्र-सुश्रुतानां मन्त्रिणां प्रमति-मित्रगुप्त-मन्त्रगुप्त-विश्रुताख्याः महदभिख्याः[3] सूनवो नवोद्यदिन्दुरुचश्चिरायुषः समजायन्त। राजवाहनो मन्त्रिपुत्रैरात्ममित्रैः सह बालकेलीरनुभवन्नवर्द्धत।

अथ कदाचिदेकेन तापसेन रसेन राजलक्षणविराजितं कञ्चिन् नयनानन्दकरं कुमारं राज्ञे समर्प्यावोचि,

---

[1] ब्रह्मणो वर्चः तेजः 'ब्रह्मवर्चसम्'; "तपःस्वाध्यायजं यत्तु तेजस्तद् ब्रह्मवर्चसम्।" "ब्रह्महस्तिभ्यां वर्चसः" इत्यच्।

[2] जातकर्माख्येण संस्कारेण। तथा च मनुः—

"प्राङ्नाभिवर्धनात् पुंसो जातकर्म विधीयते।
मन्त्रवत् प्राशनञ्चास्य हिरण्यमधुसर्पिषाम्॥"

[3] अत्रापि महाभिख्या इत्येवोचितम्, "आन्महतः समानाधिकरणजातीययोः" इति सूत्रस्य जागरूकत्वात्।

'भूवल्लभ, कुशसमिदानयनाय वनं गतेन मया काचिद-रण्या व्यक्तकार्पण्यास्रु मुञ्चन्ती वनिता विलोकिता। "निर्जने वने किं निमित्तं रुद्यते त्वया" इति पृष्टा सा करसरोरुहैरस्रु प्रमृज्य सगद्गदं मामवोचत्, "मुने, लावण्यजितपुष्पसायके मिथिलानायके कीर्त्तिव्याप्तसुधर्म्मणि[1] निजसुहृदो मगधराजस्य सीमन्तिनी-सीमन्तमहोत्सवाय पुत्रदारसमन्विते पुष्पपुरमुपेत्य कञ्चन कालमधिवसति, समाराधितगिरीशो मालवाधीशो मगधराजं योद्धुमभ्यगात्। तत्र प्रख्यातयोरेतयोरसंख्ये संख्ये वर्त्तमाने सुहृत्साहायकं कुर्वाणो विदेहेश्वरः प्रहारवर्म्मा जयवता रिपुणाभिगृह्य कारुण्येन पुण्येन विसृष्टो हतावशेषेण शून्येन सैन्येन सह स्वपुरगमनमकरोत्। ततो वनमार्गेण दुर्गेण गच्छन्नधिकबलेन शबरबलेन रभसादभिहन्यमानो मूल-बलाभिरक्षितावरोधो[2] महानिरोधः स पलायिष्ट।

"तदीयार्भकयोर्यमयोर्धात्रीभावेन परिकल्पिताहं मद्-दुहिता च तीव्रगतिं भूपतिमनुगन्तुमक्षमे अभूव। तत्र विवृतवदनः कोऽपि रूपी कोप इव व्याघ्रः शीघ्रं

---

[1] 'कीर्त्त्या व्याप्तः' 'सुधर्म्मा' देवसभा येन तस्मिन्; 'सुधर्म'त्यत्र "धर्म्मादनिच् केवलात्" इत्यनिच्।

[2] 'मूलबलं' परम्परागतसैन्यम्, तेन 'अभिरक्षितः' 'अवरोधः' शुद्धान्तः (अन्तःपुरपरिजनवर्ग इति यावत्) यस्य सः।

मामाघ्रातुमागतवान्। भीताहमुदग्रग्रावणि[1] स्खलन्ती पर्य्यपतम्; मदीयपाणिभ्रष्टो बालकः कस्यापि कपिलाशवस्य[2] क्रोडमभ्यलीयत। तच्छवाकर्षिणोऽमर्षिणो व्याघ्रस्य प्राणान् बाणो बाणासनयन्त्रमुक्तोऽपाहरत्; विलोलालको बालकोऽपि शबरैरादाय कुत्रचिदुपानीयत। कुमारमपरमुद्वहन्ती मद्दुहिता कुत्र गता न जाने। साहं मोहं गता केनापि कृपालुना वृष्णिपालेन[3] स्वकुटीरमावेश्य विरोपितव्रणाभवम्। ततः स्वस्थीभूय भूयः स्वभर्त्तुरन्तिकमुपतिष्ठासुरसहायतया[4] दुहितुरनभिज्ञाततया च व्याकुलीभवामि।" इत्यभिदधाना "एकाकिन्यपि स्वामिनं गमिष्यामि" इति सा तदैव निरगात्।

'अहमपि भवन्मित्रस्य विदेहनाथस्य विपन्निमित्तं

---

[1] उदग्रग्रावणि—उन्नतानि शृङ्गाणि यस्य, तादृशो यो ग्रावा पाषाणः तस्मिन्।

[2] कपिलाशवस्य—मृतस्य गोविशेषस्य; "कपिला रेणुकायां च शिंशपा गोविशेषयोः" इति मेदिनी।

[3] वृष्णिपालेन—मेषपालकेन; "वृष्णिस्तु यादवे मेषे वृष्णिः पाषण्डचण्डयोः" इति विश्वः।

[4] उपतिष्ठासुः—उपस्थातुमिच्छुः।

विषादमनुभवंस्तदन्वयाङ्कुरं[1] कुमारमन्विष्यंस्तत्रैकं
चण्डिकामन्दिरं सुन्दरं प्रागाम्। तत्रैवंविधविजयसिद्धये
कुमारं देवतोपहारं करिष्यन्तः किराताः, "महीरुहशाखाव-
लम्बितमेनमसिलतया वा, सैकततले खननिक्षिप्तचरणं
लक्ष्यीकृत्य शितशरनिकरेण वा, अनेकचरणैः पलायमानं
कुक्कुरबालकैर्वा दंशयित्वा संहनिष्यामः" इति भाषमाणा
मया समभ्यभाष्यन्त, "ननु किरातोत्तमाः, घोरप्रचारे
कान्तारे स्खलितपथः स्थविरभूसुरोऽहं मम पुत्रकं क्वचि-
च्छायायां निक्षिप्य मार्गान्वेषणाय किञ्चिदन्तरमगच्छम्।
स कुत्र गतः? केन वा गृहीतः? परीक्ष्यापि न
वीक्ष्यते; तन्मुखावलोकनेन विनानेकान्यहान्यतीतानि।
किं करोमि? क्व यामि? भवद्भिर्न किमदर्शि?" इति।
"द्विजोत्तम, कश्चिदत्र तिष्ठति; किमेष तव नन्दनः
सत्यमेव? तदेनं गृहाण" इत्युक्त्वा दैवानुकूल्येन मह्यं तं ते
व्यतरन्। तेभ्यो दत्ताशीरहं बालकमङ्गीकृत्य शिशिरो-
दकादिनोपचारेणाश्वास्य निःशङ्कं भवदङ्कं समानीत-
वानस्मि। एनमायुष्मन्तं पितृरूपो भवानभिरक्षतात्' इति।

राजा सुहृदापन्निमित्तं शोकं तन्नन्दनवदनविलोकन-
सुखेन किञ्चिदधरीकृत्य तमुपहारवर्मनाम्नाहूय राजवाहन-
मिव पुपोष।

---

[1] तदन्वयाङ्कुरम्—'तस्य' 'अन्वयो' वंशः तस्य 'अङ्कुरः' प्ररोहः तम्; तस्य वंशरक्षानिदानमित्यर्थः।

जनपतिरेकस्मिन् पुण्यदिवसे तीर्थस्नानाय पक्कण-निकटमार्गेण[1] गच्छन्नबलया कयाचिदुपलालितमनुपम-शरीरं कुमारं कञ्चिदवलोक्य कुतूहलाकुलस्तामपृच्छत्, 'भामिनि, रुचिरमूर्त्तिः सराजगुणसम्पूर्त्तिरसावर्भको भवदन्वयसम्भवो न भवति; कस्य नयनानन्दनोऽयम्? निमित्तेन केन भवदधीनो जातः? कथ्यतां याथातथ्येन त्वया' इति। प्रणतया तया शबर्य्या सलीलमलापि, 'राजन्, आत्मपल्लीसमीपे पदव्यां वर्त्तमानस्य मिथिलेश्वरस्य सर्वस्वमपहरति शबरसैन्ये, मद्दयितेनापहृत्य कुमार एष मह्यमर्पितो व्यवर्द्धत' इति।

तदवधार्य्य, कार्य्यज्ञो राजा मुनिकथितं द्वितीयं राजकुमारमेव निश्चित्य, सामदानाभ्यां तामनुनीय, अपहारवर्मेत्याख्याय, देव्यै 'वर्द्धय' इति तं समर्पितवान्।

कदाचिद् वामदेवशिष्यः सोमदेवशर्म्मा नाम कञ्चिद् बालकं राज्ञः पुरो निक्षिप्याभाषत, 'देव, रामतीर्थे स्नात्वा प्रत्यागच्छता मया काननावनौ वनितया कयापि धार्य्यमाणमेनमुज्ज्वलाकारं कुमारं विलोक्य सादरमभाणि, "स्थविरे, का त्वम्? एतस्मिन्नटवीमध्ये बालकमुद्वहन्ती किमर्थमायासेन भ्रमसि?" इति।

---

[1] पक्कणनिकटमार्गेण—शबरालयसमीपवर्त्तिनि पथि; 'पक्कणः शबरालयः' इत्यमरः।

'वृद्धयाप्यभाषि, "मुनिवर, कालयवननाम्नि द्वीपे कालगुप्तो नाम धनाढ्यो[1] वैश्यवरः कश्चिदस्ति। तन्नन्दिनीं नयनानन्दकारिणीं सुवृत्तां नामैतस्माद् द्वीपादागतः कश्चिन्मगधनाथमन्त्रिसम्भवो रत्नोद्भवो नाम रमणीयगुणालयो भ्रान्तभूवलयो मनोहारी व्यवहारी[2] उपयम्य सुवस्तुसम्पदा श्वशुरेण सम्मानितोऽभूत्। कालक्रमेण नताङ्गी गर्भिणी जाता। ततः सोदरविलोकनकुतूहलेन रत्नोद्भवः कथञ्चिच्छ्वशुरमनुनीय चपललोचनयानया सह प्रवहणमारुह्य पुष्पपुरमभिप्रतस्थे। कल्लोलमालिकाभिहतः पोतः समुद्राम्भस्यमज्जत्। गर्भभरालसां तां ललनां धात्रीभावेन कल्पिताहं कराभ्यामुद्वहन्ती फलकमेकमधिरुह्य दैवगत्या तीरभूमिमगमम्। सुहृज्जनपरिवृतो रत्नोद्भवस्तत्र निमग्नो वा, केनाप्युपायेन तीरमगमद् वा, न जानामि। क्लेशस्य परां काष्ठामधिगता सुवृत्तास्मिन्नटवीमध्येऽद्य सुतमसूत[3]। प्रसववेदनया विचेतना सा प्रच्छायशीतले तरुतले निवसति। विजने वने स्थातुमशक्यतया जनपदगामिनं मार्गमन्वेष्टुमुद्युक्तया मया विवशाया-

---

[1] "विशिष्टवाचकानां पदानां सति विशेषणस्य पृथक् समभिव्याहारे सामान्यार्थपरत्वम्" इति न्यायेनात्र पौनरुक्त्यपरिहारः।

[2] अत्र पाक्षिकः प्रकृतिभावो बहूनां वैयाकरणानां सम्मतः।

[3] अत्राद्यतने लङः प्रयोगश्चिन्त्यः; एवमन्यत्रापि।

स्तस्याः समीपे बालकं निक्षिप्य गन्तुमनुचितमिति कुमारोऽप्यानायि" इति ।

'एतस्मिन्नेव क्षणे वन्यो वारणः कश्चिददृश्यत । तं विलोक्य भीता सा बालकं निपात्य प्राद्रवत् । अहं समीपलतागुल्मके प्रविश्य परोक्षमाणोऽतिष्ठम् । निपतितं बालकं पल्लवकवलमिवाददाने गजपतौ, कण्ठोरवो भीमरवो महाग्रहेण न्यपतत् । भयाकुलेन दन्तावलेन झटिति वियति समुत्पात्यमानो बालको न्यपतत् । चिरायुष्मत्तया स चोन्नततरुशाखासमासीनेन वानरेण केनचित् पक्कफलबुद्ध्या परिगृह्य फलेतरतया विततस्कन्धमूले निक्षिप्तोऽभूत् । सोऽपि मर्कटः क्वचिदगात् । बालकेन सत्त्वसम्पन्नतया सकलक्लेशसहेनाभावि ।

'केसरिणा करिणं निहत्य कुत्रचिदगामि । लतागृहान्निर्गतोऽहमपि तेजःपुञ्जं बालकं शनैरवनीरुहादवतार्य्य, वनान्तरे वनितामन्विष्याविलोक्य, एनमानीय, गुरवे निवेद्य, तन्निदेशेन भवन्निकटमानीतवानस्मि' इति ।

सर्वेषां सुहृदामेकदैवानुकूलदैवाभावेन महदाश्चर्य्यं बिभ्राणो राजा 'रत्नोद्भवः कथमभवत् ?' इति चिन्तयंस्तन्नन्दनं पुष्पोद्भवनामधेयं विधाय, तद्वृत्तं व्याख्याय, सुश्रुताय विषादसन्तोषावनुभवंस्तदनुजतनयं समर्पितवान् ।

अन्येद्युः कञ्चन बालकमुरसि दधती वसुमती वल्लभमभिगता । तेन 'कुत्रत्योऽयम् ?' इति पृष्टा समभाषत,

'राजन्, अतीतायां रात्रौ काचन दिव्यवनिता मम पुरः कुमारमेकं संस्थाप्य निद्रामुद्रितां मां विबोध्य विनीताब्रवीत्—'देवि, त्वन्मन्त्रिणो धर्मपालनन्दनस्य कामपालस्य वल्लभा यक्षकन्याहं तारावली नाम, नन्दिनी मणिभद्रस्य। यक्षेश्वरानुमत्या मदात्मजमेनं भवत्तनूजस्याम्भोनिधिवलयवेष्टितक्षोणीमण्डलेश्वरस्य भाविनो विशुद्धयशोनिधे राजवाहनस्य परिचर्य्याकरणायानीतवत्यस्मि। त्वमेनं मनोजसन्निभमभिवर्धय" इति। विस्मयविकसितनयनया मया सविनयं सत्कृता स्वच्छो यक्षी साप्यदृश्यतामयासीत्' इति।

कामपालस्य यक्षकन्यासमागमे विस्मयमानमानसो राजहंसो रञ्जितमित्रं सुमित्रं मन्त्रिणमाहूय तदीयभ्रातृपुत्रमर्थपालं विधाय तस्मै सर्वं वार्तादिकं व्याख्यायादात्।

ततः परस्मिन् दिवसे वामदेवान्तेवासी तदाश्रमवासी समाराधितदेवकीर्तिं निर्भर्त्सितमारमूर्तिं कुसुमसुकुमारं कुमारमेकमवगमय्य नरपतिमवादीत्—'देव, तीर्थयात्राप्रसङ्गेन कावेरीतीरमागतोऽहं विलोलालकं बालकं निजोत्सङ्गतले निधाय रुदतीं स्थविरामेकां विलोक्यावोचम्—"स्थविरे, का त्वम्? अयमर्भकः कस्य नयनानन्दकरः? कान्तारं किमर्थमागता? शोककारणं किम्?" इति।

'सा करयुगलेन बाष्पजलमुन्मृज्य निजशोकशंकूत्पाटनक्षममिव मामवलोक्य शोकहेतुमवोचत्—"द्विजात्मज,

राजहंसमन्त्रिणः सितवर्मणः कनीयानात्मजः सत्यवर्मा तीर्थयात्राभिलाषेण देशमेनमागच्छत्। स कस्मिंश्चिद-ग्रहारे[1] कालीं नाम कस्यचिद्भूसुरस्य नन्दिनीं विवाह्य तस्या अनपत्यतया गौरीं नाम तद्भगिनीं काञ्चनकान्तिं परिणीय तस्यामेकं तनयमलभत। काली सासूयमेकदा धात्र्या मया सह बालमेनमेकेन मिषेणानीय तटिन्यामि-तस्यामक्षिपत्। करेणैकेन बालमुद्धृत्यापरेण प्लवमाना नदीवेगागतस्य कस्यचित्तरोः शाखामवलम्ब्य तत्र शिशुं निधाय नदीवेगेनोह्यमाना केनचित्तरुलग्नेन कालभोगिना-हमदङ्क्षि। मदवलम्बीभूतो भूरुहोऽयमस्मिन्देशे तीरमगमत्। गरलस्योद्दीपनतया मयि मूर्च्छायामरण्ये कश्चन शरणो नास्तीति मया शोच्यते[2]" इति।

'ततो विषमविषज्वालावलीढावयवा सा धरणीतले न्यपतत्। दयाविष्टहृदयोऽहं मन्त्रबलेन विषव्यवस्थामप-नेतुमक्षमः समीपकुञ्जेष्वोषधिविशेषमन्विष्य प्रत्यागतो व्युत्क्रान्तजीवितां तां व्यलोकयम्। तदनु तस्याः पावक-

---

[1] ब्राह्मणाधिकृते राजादिदत्ते स्थाने। 'अग्रं' ब्राह्मणभोजनं तदर्थं 'ह्रियन्ते' राजधनात् पृथक् क्रियन्ते इति 'अग्रहाराः' क्षेत्रग्रामादयः।

[2] अयं बाल इति शेषः। यद्वा, "इन्द्रियादिरसामर्थ्यं वक्ष्यमाणमदीदिशत्", "दृष्टे सूर्ये पुनरपि भवान् वाहयेदश्वशेषम्", "कोकिलो विप्ररूपेण राजकन्या-मजीहरत्", "दशवर्षसहस्राणि रामो राज्यमकारयत्" इत्यादिवत् स्वार्थे णिच्। एतदुभयं "स्थितेर्गतिश्चिन्तनीया" इति न्यायेनेति बोध्यम्।

संस्कारं विरचय्य शोकाकुलचेता बालमेनमगतिमादाय सत्यवर्मवृत्तान्तश्रवणवेलायां तन्निवासाग्रहारनामधेयस्याश्रुततया तदन्वेषणमशक्यमित्यालोच्य भवदमात्यतनयस्य भवानेवाभिरक्षितेति भवन्तमेनमनयम्' इति ।

तन्निशम्य सत्यवर्मस्थितेः सम्यगनिश्चिततया खिन्नमानसो नरपतिः सुमतये मन्त्रिणे सोमदत्तं नाम तदनुजतनयमर्पितवान् । सोऽपि सोदरमागतमिव मन्यमानो विशेषेण पुपोष ।

एवं मिलितेन कुमारमण्डलेन बालकेलीरनुभवन्नधिरूढानेकवाहनो राजवाहनोऽनुक्रमेण चौलोपनयनादिसंस्कारजातमलभत । ततः सकललिपिज्ञानं निखिलदेशीयभाषापाण्डित्यं षडङ्गसहितवेदसमुदायकोविदत्वं काव्यनाटकाख्यानकाख्यायिकेतिहासचित्रकथासहितपुराणगणनैपुण्यं धर्मशब्दज्योतिस्तर्कमीमांसादिसमस्तशास्त्रनिकरचातुर्यं कौटिल्यकामन्दकीयादि-नीतिपटलकौशलं वीणाद्यशेषवाद्यदाक्ष्यं सङ्गीतसाहित्यहारित्वं मणिमन्त्रौषधादिमायाप्रपञ्चचुञ्चुत्वं मातङ्गतुरङ्गादिवाहनारोहणपाटवं विविधायुधप्रयोगचणत्वं चौर्यदुरोदरादिकपटकलाप्रौढत्वं च तत्तदाचार्येभ्यः सम्यग् लब्ध्वा यौवनेन विलसन्तं कृत्येष्वनलसं तं कुमारनिकरं निरीक्ष्य महीवल्लभः सः 'अहं शत्रुजनदुर्लभः' इति परमानन्दममन्दमविन्दत ।

इति श्रीदण्डिनः कृतौ दशकुमारचरिते कुमारोत्पत्तिर्नाम प्रथम उच्छ्वासः ।

---

# द्विजोपकृतिः

[ पूर्व्वपीठिका—द्वितीय उच्छ्वासः ]

अथैकदा वामदेवः सकलकलाकुशलेन कुसुमसायक-संशयितसौन्दर्य्येण कल्पितसोदर्य्येण साहसा[1]पहसितकुमारेण सुकुमारेण कुमारनिकरेण परिवेष्टितं राजानमानतशिरसं समभिगम्य तेन तां कृतां परिचर्य्यामङ्गीकृत्य विदलिष्यमाण-विपक्षं कुमारचयं गाढमालिङ्ग्य मितसत्यवाक्येन विहिता-शीरभ्यभाषत—'भूवल्लभ, भवदीयमनोरथफलमिव समृद्धलावण्यं तारुण्यं नुतमित्रो भवत्पुत्रोऽनुभवति। सहचरसमेतस्य नूनमेतस्य दिग्विजयारम्भसमय एषः, तदस्य सकलक्लेशसहस्य राजवाहनस्य दिग्विजयप्रयाणं क्रियताम्' इति। कुमारा माराभिरामा रामाद्यपौरुषा रुषा भस्मीकृतारयो रयोपहसितसमीरणा रणाभियानेन यानेनाभ्युदयाशंसं राजानमकार्षुः। तस्मात्रिव्यमितरेषां विधाय समुचितां बुद्धिमुपदिश्य शुभे मुहूर्त्ते सपरिवारं कुमारं विजयाय विससर्ज।

---

[1] साहस—daring, spirit of adventure.

राजवाहनो मङ्गलसूचकं शुभशकुनं[1] विलोकयन् देशं कञ्चिदतिक्रम्य विन्ध्याटवीमध्यमविशत्। तत्र हेतिहति-किणाङ्कं कालायसकर्कशकायं यज्ञोपवीतेनानुमेयविप्रभावं व्यक्तकिरातप्रभावं लोचनपरुषं कमपि पुरुषं ददर्श। तेन विहितपूजनो राजवाहनोऽभाषत—'ननु मानव, जन-सङ्गरहिते मृगहिते घोरप्रचारे कान्तारे विन्ध्याटवीमध्ये भवानेकाकी किमिति निवसति? भवदंसोपनीतं यज्ञोपवीतं भूसुरभावं द्योतयति, हेतिहतिभिः किरात-रीतिरनुमीयते, कथय किमेतत्' इति।

'तेजोमयोऽयं मानुषमात्रपौरुषो नूनं न भवति' इति मत्वा स पुरुषस्तद्वयस्यसुखान्नामजनने विधाय तस्मै निजवृत्तान्तमकथयत्—

'राजनन्दन, केचिद्[2]स्यामटव्यां वेदादिविद्याभ्यासमप-हाय निजकुलाचारं दूरीकृत्य सत्यशौचादिधर्मव्रातं परिहृत्य किल्बिषमन्विष्यन्तः पुलिन्दपुरोगमास्तदन्नमुपभुञ्जाना बहवो[2] ब्राह्मणब्रुवा निवसन्ति। तेषु कस्यचित्पुत्रो निन्दा-पात्रचारित्रो मातङ्गो नामाहं सह किरातबलेन जनपदं

---

[1] शुभशब्देनैव मङ्गलसूचकत्वे सिद्धे 'मङ्गलसूचकं शुभशकुनम्' इत्यत्र पुनरुक्तिदोषो दुष्परिहरः। शुभशकुनशब्दस्य शकुनविशेषे रूढत्वान्नात्र पौनरुक्त्यमित्यपि केचित्।

[2] 'केचित्' 'बहवः'—अनयोरन्यतरो न पठनीयः।

प्रविश्य ग्रामेषु धनिनः स्त्रीबालसहितानानीयाटव्यां बन्धने निधाय तेषां सकलधनमपहरन्नुद्धृत्य वीतदयो व्यचरम्। कदाचिदेकस्मिन् कान्तारे मदीयसहचरगणेन जिघांस्यमानं भूसुरमेकमवलोक्य दयायत्तचित्तोऽब्रवम्—"ननु पापाः, न हन्तव्यो ब्राह्मणः" इति।

'ते रोषारुणनयना मां बहुधा निरभर्त्सयन्[1]। तेषां भाषणपारुष्यमसहिष्णुरहमवनिसुररक्षणाय चिरं प्रयुध्य तैरभिहतो गतजीवितोऽभवम्। ततः प्रेतपुरीमुपेत्य तत्र देहधारिभिः पुरुषैः परिवेष्टितं सभामध्ये रत्नखचितसिंहासनासीनं शमनं विलोक्य तस्मै दण्डप्रणाममकरवम्। सोऽपि मामवेक्ष्य चित्रगुप्तं नाम निजामात्यमाहूय तमवोचत्—"सचिव, नैषोऽमुष्य मृत्युसमयः। निन्दितचरितोऽप्ययं महीसुरनिमित्तं गतजीवितोऽभूत्। इतः प्रभृति विगलितकल्मषस्यास्य पुण्यकर्मकरणे रुचिरुदेष्यति। पापिष्ठैरनुभूयमानमत्र यातनाविशेषं विलोक्य पुनरपि पूर्वशरीरमनेन गम्यताम्" इति।

'चित्रगुप्तोऽपि तत्र तत्र सन्तप्तेष्वायसस्तम्भेषु बध्यमानान् अत्युष्णीकृते विततशरावतैले निक्षिप्यमाणान्, लगुडैर्जर्जरीकृतावयवान्, निशितटङ्कैः परितक्ष्यमाणानपि

---

[1] भर्त्सयतेरुभयपदित्वं वोपदेवादीनां सम्मतम्; पाणिनीया अप्यनुदात्तेत्त्वप्रयुक्तस्यात्मनेपदस्यानित्यत्वमातिष्ठन्ते।

दर्शयित्वा पुण्यबुद्धिमुपदिश्य माममुञ्चत्। तदेव पूर्वं शरीरमहं प्राप्तो महाटवीमध्ये शीतलोपचारं रचयता महीसुरेण परीक्ष्यमाणः शिलायां शयितः क्षणमतिष्ठम्। तदनु विदितोदन्तो मदीयबन्धुगणः सहसागत्य मन्दिरमानीय मामपक्रान्तव्रणमकरोत्।

'द्विजन्मा कृतघ्नो मह्यमक्षरशिक्षां विधाय विविधागमतन्त्रमाख्याय कल्मषक्षयकारणं सदाचारमुपदिश्य ज्ञानेक्षणगम्यमानस्य शशिखण्डशेखरस्य पूजाविधानमभिधाय पूजां मत्कृतामङ्गीकृत्य निरगात्। तदारभ्याहं किरातकृतसंसर्गं बन्धुकुलवर्गमुत्सृज्य सकललोकैकगुरुमिन्दुकलावतंसं चेतसि स्मरन्नस्मिन् कानने दूरीकृतकलङ्को वसामि। देव, भवते विज्ञापनीयं रहस्यं किंचिदस्ति, आगम्यताम्' इति।

स वयस्यगणादपनीय रहसि पुनरेनमभाषत—'राजन्, अतीते निशान्ते गौरीपतिः स्वप्नसंनिहितो निद्रामुद्रितलोचनं विबोध्य प्रसन्नवदनकान्तिः प्रश्रयानतं मामवोचत्—"मातङ्ग, दण्डकारण्यान्तरालगामिन्यास्तटिन्यास्तीरभूमौ सिद्धसाध्याराध्यमानस्य स्फटिकलिङ्गस्य पश्चादद्रिपतिकन्यापदपङ्क्तिचिह्नितस्याश्मनः सविधे विधेराननमिव किमपि बिलं विद्यते। तत् प्रविश्य तत्र निक्षिप्तं ताम्रशासनं शासनं विधातुरिव समादाय विधिं तदुपदिष्टं दिष्टविजयमिव विधाय पाताललोकाधीश्वरेण भवता भवितव्यम्। भवत्साहाय्यकरो राजकुमारोऽद्य श्वो वा समागमिष्यति"

इति। तदादेशानुगुणमेव भवदागमनमभूत्। साधनाभिलाषिणो मम तोषिणो रचय साहाय्यम्' इति।

'तथा' इति राजवाहनः साकं मातङ्गेन नमितोत्तमाङ्गेन विहायार्धरात्रे निद्रापरतन्त्रं मित्रगणं वनान्तरमवाप। तदनु तदनुचराः कल्ये साकल्येन राजकुमारमनवलोकयन्तो विषण्णहृदयास्तेषु तेषु वनेषु सम्यगन्विष्यानवेक्षमाणा एतदन्वेषणमनीषया देशान्तरं चरिष्णवोऽतिसहिष्णवो निश्चितपुनःसंगमसंकेतस्थानाः[1] परस्परं वियुज्य ययुः।

लोकैकवीरेण कुमारेण रक्ष्यमाणः सन्तुष्टान्तरङ्गो मातङ्गोऽपि बिलं शशिशेखरकथिताभिज्ञानपरिज्ञातं निःशङ्कं प्रविश्य गृहीतताम्रशासनो रसातलं पथा तेनैवोपेत्य तत्र कस्यचित् पत्तनस्य निकटे केलीकाननकासारस्य विततसारसस्य समीपे नानाविधेनेशशासनविधानोपपादितेन हविषा होमं विरचय्य प्रत्यूहपरिहारिणि सविस्मयं विलोकयति राजवाहने समिदाज्यसमुज्ज्वलिते ज्वलने

---

[1] यद्यपि सङ्केतस्थानशब्दः पूर्व्वावधारितस्य मेलनस्थानस्य वाचकः, तथाप्यत्र सङ्गमशब्दसाहचर्य्यात्, "स कीचकै"रित्यादिवत् विशेषांशमोषेण सामान्यतः स्थानपरत्वमेतस्य बोध्यम्। यद्वा, "गतार्थस्यापि विशेष्यस्य विशेषणदानार्थं क्वचित् प्रयोगः कार्य्यः" इति न्यायेनात्र पुनारूपविशेषणदानार्थं सङ्गमशब्दस्योपादानम्।

पुण्यगेहं देहं मन्त्रपूर्वकमाहुतीकृत्य तडिद्भासमानकान्तिं दिव्यां तनुमलभत।

तदनु मणिमयमण्डनमण्डलमण्डिता सकललोकललनाकुलललामभूता कन्यका काचन विनीतानेकसखीजनानुगम्यमाना कलहंसगत्या शनैरागत्यावनिसुरोत्तमाय मणिमेकमुज्ज्वलाकारमुपायनीकृत्य तेन 'का त्वम् ?' इति पृष्टा सोत्कण्ठा कलकण्ठस्वनेन मन्दं मन्दमुदञ्जलिरभाषत—'भूसुरोत्तम, अहमसुरोत्तमनन्दिनी कालिन्दी नाम। मम पितास्य लोकस्य शासिता महानुभावो निजपराक्रमासहिष्णुना विष्णुना दूरीकृतामरे समरे यमनगरातिथिरकारि। तद्वियोगशोकसागरमग्नां मामवेत्य कोऽपि कारुणिकः सिद्धतापसोऽभाषत—"बाले, कश्चिद्दिव्यदेहधारी मानवो नवो वल्लभस्तव भूत्वा सकलं रसातलं पालयिष्यति" इति।

'तदादेशं निशम्य घनशब्दोन्मुखी चातकी वर्षागमनमिव तवालोकनकाङ्क्षिणी चिरमतिष्ठम्। मन्मनोरथफलायमानं भवदागमनमवगम्य मद्राज्यावलम्बभूतामात्यानुमत्या भवन्तमागच्छम्। लोकस्यास्य राज्यलक्ष्मीमङ्गीकृत्य मां तत्सपत्नीं करोतु भवान्' इति।

मातङ्गोऽपि राजवाहनानुमत्या तां तरुणीं परिणीय रसातलराज्यमुररीकृत्य परमानन्दमाससाद।

वञ्चयित्वा वयस्यगणं समागतो राजवाहनस्तदव-

लोकनकौतूहलेन भुवं गमिष्णुः[1] कालिन्दीदत्तं क्षुत्पिपासादिक्लेशनाशनं मणिं साहाय्यकरणसन्तुष्टान्मातङ्गाल्लब्ध्वा कञ्चनाध्वानमनुवर्तमानं तं विसृज्य बिलपथेन तेन निर्ययौ। तत्र च मित्रगणमनवलोक्य भुवं बभ्राम। भ्रमंश्च विशालोपशल्ये कमप्याक्रीडमासाद्य तत्र विश्रिश्रमिषुरान्दोलिकारूढं रमणीसहितमाप्तजनपरिवृतमुद्याने समागतमेकं पुरुषमपश्यत्।

सोऽपि परमानन्देन पल्लवितचेता विकसितवदनारविन्दः 'मम स्वामी सोमकुलावतंसो विशुद्धयशोनिधी राजवाहन एषः। महाभाग्यतयाकाण्ड एवास्य पादमूलं गतवानस्मि। संप्रति महानयनोत्सवो जातः' इति ससम्भ्रममान्दोलिकाया अवतीर्य सरभसपदविन्यासविलासिहर्षोत्कर्षचरितस्त्रिचतुरपदान्युद्गतस्य चरणकमलयुगलं गलदुल्लसन्मल्लिकावलयेन मौलिना पस्पर्श। प्रमोदाश्रुपूर्णो राजा पुलकिताङ्गं तं गाढमालिङ्ग्य 'अये सौम्य सोमदत्त' इति व्याजहार।

ततः कस्यापि पुन्नागभूरुहस्य छायाशीतले तले संविष्टेन मनुजनाथेन सप्रणयमभाषि—'सखे कालमेतावन्तं

---

[1] यद्यपि 'भुवश्च' इति सूत्रे चकारोऽनुक्तसमुच्चयार्थं इति व्याख्याय भ्राजिष्णुरित्युदाजहार वृत्तिकारस्तथापि शिष्टैरनादृतानां गमिष्णु-करिष्णु-प्रभृतिपदानां प्रयोगो लेखकस्य निरङ्कुशत्वमेवावबोधयति।

देशे कस्मिन्, प्रकारेण केनास्थायि भवता? संप्रति कुत्र गम्यते? तरुणो कोयम्? एष परिजनः सम्पादितः कथम्? कथय' इति। सोऽपि मित्रसन्दर्शनव्यतिकरापगतचिन्ताज्वरातिशयो मुकुलितकरकमलः सविनयमात्मीयप्रचारप्रकारमवोचत्।

इति श्रीदण्डिनः कृतौ दशकुमारचरिते द्विजोपकृतिर्नाम द्वितीय उच्छ्वासः।

---

# सोमदत्तचरितम्

## [ पूर्व्वपीठिका—तृतीय उच्छ्वासः ]

'देव, भवच्चरणकमलसेवाभिलाषोऽहं भ्रमन्नेकस्यां वनावनौ पिपासाकुलो लतापरिवृतं शीतलं नदसलिलं पिबन्नुज्ज्वलाकारं रत्नं तत्रैकमद्राक्षम्। तदादाय गत्वा कञ्चनाध्वानमम्बरमणेरत्युष्णतया गन्तुमक्षमो वनेऽस्मिन्नेव किमपि देवतायतनं प्रविष्टो दीनाननं बहुतनयसमेतं स्थविरमहीसुरमेकमवलोक्य कुशलमुदितदयोऽहमपृच्छम्। कार्पण्यविवर्णवदनो महदाशा[1]पूर्णमानसोऽवोचदग्रजन्मा—

---

[1] "महाशा" इत्युचितम्।

"महाभाग, सुतानेतान्मातृहीनाननेकैरुपायै रक्षन्निदानी-मस्मिन् कुदेशे भैक्षं सम्पाद्य ददद्देतेभ्यो वसामि शिवालये-ऽस्मिन्" इति।

' "भूदेव, एतत्कटकाधिपती राजा कस्य देशस्य? किन्नामधेयः? किमत्रागमनकारणमस्य?" इति पृष्टोऽभाषत महीसुरः—"सौम्य, मत्तकालो नाम लाटेश्वरो देशस्यास्य पालयितुर्वीरकेतोस्तनयां वामलोचनां नाम तरुणीरत्नमसमानलावण्यं श्रावं श्रावमवधृतदुहितृप्रार्थनस्य तस्य नगरीमरौत्सीत्। वीरकेतुरपि भीतो महदुपायनमिव तनयां मत्तकालायादात्। तरुणीलाभहृष्टचेता लाटपतिः 'परिणेया निजपुर एव' इति निश्चित्य गच्छन्निजदेशं प्रति संप्रति मृगयादरेणात्र वने सैन्यवासमकारयत्। कन्यासारणि नियुक्तो मानपालो नाम वीरकेतुमन्त्री मानधनश्चतुरङ्गबल-समन्वितोऽन्यत्र रचितशिबिरस्तं निजनाथावमानखिन्न-मानसोऽन्तर्बिभेद" इति।

'विप्रोऽसौ बहुतनयो विद्वान्निर्धनः स्थविरश्च दान-योग्यः' इति तस्मै करुणापूर्णमना रत्नमदाम्। परमाह्लाद-विकसिताननोऽभिहितानेकाशीः कुत्रचिदग्रजन्मा जगाम। अध्वश्रमखिन्नेन मया तत्र निरवेशि निद्रासुखम्। तदनु पश्चान्निगडितबाहुयुगलः स भूसुरः कशाघातचिह्नित-गात्रोऽनेकनैस्त्रिंशिकानुयातोऽभ्येत्य माम् "असौ दस्युः" इत्यदर्शयत्। परित्यक्तभूसुरा राजभटा रत्नावाप्तिप्रकारं

मदुक्तमनाकर्ण्य भयरहितं मां गाढं नियम्य रज्जुभिरानीय कारागारम् "एते तव सखायः" इति निगडितान् कांश्चिन्निर्दिष्टवन्तो मामपि निगडितचरणयुगलमकार्षुः। किंकर्तव्यतामूढेन निराशक्लेशानुभवेनावोचि मया—"ननु पुरुषा वीर्यपरुषाः, निमित्तेन केन निविंशथ कारावासदुःखं दुस्तरम्? यूयं वयस्या इति निर्दिष्टमेतैः, किमिदम्?" इति।

'तथाविधं मामवेत्य भूसुरान्मया श्रुतं लाटपतिवृत्तान्तं व्याख्याय चोरवीराः पुनरवोचन्—"महाभाग, वीरकेतुमन्त्रिणो मानपालस्य किङ्करा वयम्। तदाज्ञया लाटेश्वरमारणाय रात्रौ सुरङ्गाद्वारेण तदगारं प्रविश्य तत्र राजाभावेन विषण्णा बहुधनमपहृत्य महाटवीं प्राविशाम। अपरेद्युश्च पदान्वेषिणो राजानुचरा बहवोऽभ्येत्य धृतधनचयानस्मान् परितः परिवृत्य दृढतरं बद्ध्वा निकटमानीय समस्तवस्तुशोधनवेलायामेकस्यानर्घ्यरत्नस्याभावेनास्मद्वधाय माणिक्यादानायास्मान् किलाशृङ्खलयन्" इति। श्रुतरत्नरत्नावलोकनस्थानोऽहम् 'इदं तदेव माणिक्यम्' इति निश्चित्य भूदेवदाननिमित्तां दुरवस्थामात्मनो जन्म नामधेयं युष्मदन्वेषणपर्यटनप्रकारं चाभाष्य समयोचितैः संलापैर्मैत्रीमकार्षम्।

ततोऽर्धरात्रे तेषां मम च शृङ्खलाबन्धनं निर्भिद्य तैरनुगम्यमानो निद्रितस्य द्वाःस्थगणस्यायुधजालमादाय

पुररचान् पुरतोऽभिमुखागतान् पटुपराक्रमलीलयाभिद्राव्य मानपालशिबिरं प्राविशम्।

'मानपालो निजकिङ्करेभ्यो मम कुलाभिमानवृत्तान्तं तत्कालीनं[1] विक्रमं च निशम्य मामार्चयत्। परेद्यु[2]र्मत्तकालेन प्रेषिताः केचन पुरुषा मानपालमुपेत्य "मन्त्रिन्, मदीयराजमन्दिरे सुरङ्गया बहुधनमपहृत्य चोरवीरा भवदीयं कटकं प्राविशन्; तानर्पय, नो चेन्महाननर्थः सम्भविष्यति' इति क्रूरतरं वाक्यमब्रुवन्।

'तदाकर्ण्य रोषारुणितनेत्रो मन्त्री "लाटपतिः कः, तेन मैत्री का, पुनरस्य वराकस्य सेवया किं लभ्यम्?" इति तान्निरभर्त्सयत्। ते च मानपालेनोक्तं विप्रलापं मत्तकालाय तथैवाकथयन्। कुपितोऽपि लाटपतिर्दोर्वीर्यगर्वेणाल्पसैनिकसमेतो योद्धुमभ्यगात्। पूर्वमेव कृतरणनिश्चयो मानी मानपालः सन्नद्धयोधो युद्धकामो भूत्वा निःशङ्कं निरगात्।

'अहमपि सबहुमानं मन्त्रिदत्तानि बहुलतुरङ्गमोपेतं चतुरसारथिं रथं च दृढतरं कवचं मदनुरूपं चापं च विविधबाणपूर्णं तूणीरद्वयं रणसमुचितान्यायुधानि च गृहीत्वा युद्धसन्नद्धो मदीयबलविश्वासेन रिपूद्धरणोद्युक्तं मन्त्रिणमन्वगाम्। परस्परमत्सरेण तुमुलसङ्गरकरमुभयसैन्यमतिक्रम्य समुल्लसद्भुजाटोपेन बाणवर्षं तदङ्गे विमुञ्चन्नरातीन् प्राहरम्।

---

[1] तत्कालीनमित्यपाणिनीयम्, तात्कालिकमिति साधु।

[2] परेद्युरिति प्रयोगश्चिन्त्यः। "अपरेद्युः" इति, "परेद्यवि" इति वा साधु।

ततोऽतिरयतुरङ्गमं मद्रथं तन्निकटं नीत्वा शीघ्रलङ्घनोपेत-तदीयरथोऽहमरातेः शिरःकर्तनमकार्षम् । तस्मिन् पतति तदवशिष्टसैनिकेषु पलायितेषु नानाविधहयगजादिवस्तु-जातमादाय परमानन्दसन्नतो मन्त्री ममानेकविधां सम्भावनामकार्षीत् । मानपालप्रेषितात्तदनुचरादेन-मखिलमुदन्तमाकर्ण्य सन्तुष्टमना राजाभ्युद्गतो मदीय-पराक्रमे विस्मयमानः समहोत्सवममात्यबान्धवानुमत्या शुभदिने निजतनयां मह्यमदात् ।

'ततो यौवराज्याभिषिक्तोऽहमनुदिनमाराधितमहो-पालचित्तो वामलोचनयानया सह नानाविधं सौख्यमनु-भवन् सिद्धादेशेन सुहृज्जनावलोकनफलं प्रदेशं महाकाल-निवासिनः परमेश्वरस्याराधनायाद्य पत्नीसमेतः समा-गतोऽस्मि । भक्तवत्सलस्य गौरीपतेः कारुण्येन त्वत्पदार-विन्दसन्दर्शनानन्दसन्दोहो मया लब्धः' इति ।

तन्निशम्याभिनन्दितपराक्रमो राजवाहनस्तन्निरपराध-दण्डं दैवमुपालभ्य तस्मै क्रमेणात्मचरितं कथयामास । तस्मिन्नवसरे पुरतः[1] पुष्पोद्भवं विलोक्य ससम्भ्रमं निजनिटिल-

[1] "पुरत इति तु समानकालीनं पूर्वकालीनम् इत्यादिवदप्रामाणिकमेवेति प्रामाणिकाः" इति दीक्षितचरणाः ; "केचित्तु अमुकः-पुरतः-परेद्युरित्यादिवत् एतेऽपि शब्दा अव्युत्पन्नाः पृषोदरादयो वा साधव इत्याहुः" इति बालमनोरमाकारः ।

ततस्तच्चरणाङ्गुलिमुदञ्जलिममुं गाढमालिङ्ग्यानन्दबाष्पसङ्कुलसम्फुल्ललोचनः 'सौम्य सोमदत्त, अयं स पुष्पोद्भवः' इति तस्मै तं दर्शयामास। तौ च चिरविरहदुःखं विसृज्यान्योन्यालिङ्गनसुखमन्वभूताम्।

ततस्तस्यैव महीरुहस्य छायायामुपविश्य राजा सादरहासमभाषत—'वयस्य, भूसुरकार्यं करिष्णुरहं मित्रगणो विदितार्थः सर्वथान्तरायं करिष्यतीति निद्रितान् भवतः परित्यज्य निरगाम्। तदनु प्रबुद्धो वयस्यवर्गः किमिति निश्चित्य मदन्वेषणाय कुत्र गतवान्? भवानेकाकी कुत्र गतः?' इति। सोऽपि ललाटतटचुम्बदञ्जलिपुटः सविनयमलपत्।

इति श्रीदण्डिनः कृतौ दशकुमारचरिते सोमदत्तचरितं नाम तृतीय उच्छ्वासः।

---

## पुष्पोद्भवचरितम्

### [ पूर्वपीठिका—चतुर्थ उच्छ्वासः ]

'देव, महीसुरोपकारायैव देवो गतवानिति निश्चित्यापि देवेन गन्तव्यं देशं निर्णेतुमशक्नुवानो मित्रगणः परस्परं वियुज्य दिक्षु देवमन्वेष्टुमगच्छत्। अहमपि देवस्यान्वेषणाय महीमटन् कदाचिदम्बरमध्यगतस्याम्बरमणेः किरणमसहिष्णुरेकस्य गिरितटमहीरुहस्य प्रच्छायशीतले

तले क्षणमुपाविशम्। मम पुरोभागे दिनमध्यसङ्कुचितसर्वावयवां कूर्माकृतिं मानुषच्छायां निरीक्ष्योन्मुखो गगनतलान्महारयेण पतन्तं पुरुषं कञ्चिदन्तराल एव दयोपनतहृदयोऽहमवलम्ब्य शनैरवनितले निक्षिप्य दूरापातवीतसंज्ञं तं शिशिरोपचारेण विबोध्य शोकातिरेकेणोद्गतबाष्पलोचनं तं भृगुपतनकारणमपृच्छम्।

'सोऽपि कररुहैरश्रुकणानपनयन्नभाषत—"सौम्य, मगधाधिनाथामात्यस्य पद्मोद्भवस्यात्मसंभवो रत्नोद्भवो नामाहम्। वाणिज्येन कालयवनद्वीपमुपेत्य कामपि वणिक्कन्यकां परिणीय तया सह प्रत्यागच्छन्नम्बुधौ तीरस्यानतिदूर एव प्रवहणस्य भग्नतया सर्वेषु निमग्नेषु कथं कथमपि दैवानुकूल्येन तीरभूमिमभिगम्य निजाङ्गनावियोगदुःखार्णवे प्लवमानः कस्यापि सिद्धतापसस्यादेशादरेण षोडश हायनानि कथञ्चिन्नीत्वा दुःखस्य पारमनवेक्षमाणो गिरिपतनमकार्षम्" इति। तस्मिन्नेवावसरे किमपि नारीकूजितमश्रावि—"न खलु समुचितमिदं यत्सिद्धादिष्टे पतितनयमिलने[1] विरहमसहिष्णुर्वैश्वानरं विशसि" इति। तन्निशम्य मनोविदितजनकभावं तमवादिषम्—"तात,

---

[1] यद्यप्यभियुक्तप्रयोगदर्शनात् मिल-लिखधात्वोः पाक्षिकं कुटादिष्वन्तर्भावमङ्गीकुर्वन्ति केचन तथापीदृशानां प्रयोगाणां प्रामादिकत्वमेवाभिप्रयन्ति प्रामाणिकाः।

भवति विज्ञापनीयानि बहूनि सन्ति। भवतु, पश्चादखिल-माख्यातव्यम्। अधुना नारीकूजितमनुपेक्षणीयं मया। क्षणमात्रमत्र भवता स्थीयताम्" इति।

'तदनु सोऽहं त्वरया किञ्चिदन्तरमगमम्। तत्र पुरतो भयङ्करज्वालाकुलहुतभुगवगाहनसाहसिकां मुकुलिताञ्जलिपुटां वनितां काञ्चिदवलोक्य ससम्भ्रममनलादपनीय कूजन्त्या वृद्धया सह मत्पितुरभ्यर्णमभिगमय्य स्थविरामवोचम्—"वृद्धे, भवत्यौ कुत्रत्ये? कान्तारे निमित्तेन केन दुरवस्थानुभूयते? कथ्यताम्" इति। सा सगद्गदमवादीत्—"पुत्र, कालयवनद्वीपे कालगुप्तनाम्नो वणिजः कस्यचिदेषा सुता सुवृत्ता नाम रत्नोद्भवेन निजकान्तेनागच्छन्ती जलधौ मग्ने प्रवहणे निजधात्र्या मया सह फलकमेकमवलम्ब्य दैवयोगेन कूलमुपेतासन्नप्रसवसमया कस्याञ्चिदटव्यामात्मजमसूत। मम तु मन्दभाग्यतया बाले वनमातङ्गेन गृहीते मद्द्वितीया परिभ्रमन्ती 'षोडशवर्षानन्तरं भर्तृपुत्रसङ्गमो भविष्यति' इति सिद्धवाक्यविश्वासादेकस्मिन् पुण्याश्रमे तावन्तं समयं नीत्वा शोकमपारं सोढुमक्षमा समुज्ज्वलिते वैश्वानरे शरीरमाहुतीकर्तुमुद्युक्तासीत्" इति। तदाकर्ण्य निजजननीं ज्ञात्वा तामहं दण्डवत्प्रणम्य तस्यै मद्वृत्तान्त-मखिलमाख्याय धात्रीभाषणफुल्लवदनं विस्मयविकसिताक्षं जनकमदर्शयम्। पितरौ तौ साभिज्ञानमन्योन्यं ज्ञात्वा मुदितान्तरात्मानौ विनीतं मामानन्दाश्रुवर्षेणाभिषिच्य

गाढमाश्लिष्य शिरस्युपाघ्राय कस्याश्चिन्महीरुहच्छायाया- मुपाविशताम्। "कथं निवसति महीवल्लभो राजहंसः?" इति जनकेन पृष्टोऽहं तस्य राज्यच्युतिं त्वदीयजननं सकलकुमारावाप्तिं तव दिग्विजयारम्भं भवतो मातङ्गानु- यानमस्माकं युष्मदन्वेषणकारणं सकलमभ्यधाम्।

'ततस्तौ कस्यचिदाश्रमे मुनेरस्थापयम्। ततो देवस्यान्वेषणपरायणोऽहमखिलकार्यनिमित्तं वित्तं निश्चित्य भवदनुग्रहाल्लब्धस्य साधकत्वस्य साहाय्यकरणदक्षं शिष्यगणं निष्पाद्य विन्ध्यवनमध्ये पुरातनपत्तनस्थानान्युपेत्य विविध- निधिसूचकानां महीरुहाणामधोनिक्षिप्तान् वसुपूर्णान् कलसान् सिद्धाञ्जनेन ज्ञात्वा रक्षिषु परितः स्थितेषु खनन- साधनैरुत्पाद्य दीनारानसंख्यान् राशीकृत्य तत्कालगतमनति- दूरे निवेशितवणिक्कटकं कञ्चिदभ्येत्य तत्र बलिनो बलीवर्दान् गोणीश्च क्रीत्वा, अन्यद्रव्यमिषेण वसु तद्गोणीसञ्चितं तैरुह्य- मानं शनैः कटकमनयम्। तदधिकारिणा चन्द्रपालेन केन- चिद्वणिक्पुत्रेण विरचितसौहृदो[1] ऽहमसुनैव साकमुज्जयिनी- मुपाविशम्[2]। मत्पितरावपि तां पुरीमभिगमय्य सकल- गुणनिलयेन बन्धुपालनाम्ना चन्द्रपालजनकेन नीयमानो मालवनाथदर्शनं विधाय तदनुमत्या गूढवसतिमकरवम्।

---

[1] 'सुहृद्'-शब्दाद् युवादित्वादपि संज्ञापूर्वकस्य विधेरनित्यत्वाद् "हृद्भग—" इत्यस्याप्रवृत्तावादिवृद्धिरेव इति दुर्घटवृत्तिः।

[2] उपविशतेः प्रवेशार्थे प्रयोगादवाचकत्वं स्फुटमेव।

'ततः काननभूमिषु भवन्तमन्वेष्टुमुद्युक्तं मां परममित्रं बन्धुपालो निशम्यावदत्—"सकलं धरणीतलमपारमन्वेष्टुमक्षमो भवान्मनोग्लानिं विहाय तूष्णीं तिष्ठतु। भवन्नायकालोकनकारणं शुभशकुनं निरीक्ष्य कथयिष्यामि" इति। तन्नपितामृताश्वासितहृदयोऽहमनुदिनं तदुपकण्ठवर्ती कदाचिद् बालचन्द्रिकां नाम तरुणीरत्नं वणिङ्मन्दिरलक्ष्मीं मूर्तामिवावलोक्य तदनुरक्तं दुरात्मानं दारुवर्माणं चित्रैरुपायैर्निहत्य, विवाह्य तामिन्दुमुखीं दिवसेऽस्मिन्निर्गत्य पुराद् बहिर्वर्तमानो नेत्रोत्सवकारि भवदवलोकनसुखमप्यनुभवामि' इति।

एवं मित्रवृत्तान्तं निशम्याम्लानमानसो राजवाहनः स्वस्य च सोमदत्तस्य च वृत्तान्तमस्मै निवेद्य सोमदत्तम् 'महाकालेश्वराराधनानन्तरं भवद्वल्लभां सपरिवारां निजकटकं प्रापय्यागच्छ' इति नियुज्य पुष्पोद्भवेन सेव्यमानो भूस्वर्गायमाणमवन्तिकापुरं विवेश। तत्र 'अयं मम स्वामिकुमारः' इति बन्धुपालादये बन्धुजनाय कथयित्वा तेन राजवाहनाय बहुविधां सपर्यां कारयन् सकलकलाकुशलो महीसुरवर इति पुरि प्रकटयन् पुष्पोद्भवोऽमुष्य राज्ञो मज्जनभोजनादिकमनुदिनं स्वमन्दिरे कारयामास।

इति श्रीदण्डिनः कृतौ दशकुमारचरिते पुष्पोद्भवचरितं नाम चतुर्थ उच्छ्वासः।

———

# अवन्तिसुन्दरीपरिणय:

[ पूर्वपीठिका—पञ्चम उच्छ्वास: ]

अथ धृतहरिचन्दनपरिमलभरेणेव मन्दगतिना दक्षिणानिलेन सहकारकिसलयमकरन्दास्वादनरक्तकण्ठानां मधुकरकलकण्ठानां काकलीकलकलेन दिक्चक्रं वाचालयन्, माकन्दसिन्दुवार-रक्ताशोककिंशुकतिलकेषु कलिकामुपपादयन्, मदनमहोत्सवाय रसिकमनांसि समुल्लासयन् वसन्तसमय: समाजगाम। तस्मिन्नतिरमणीये कालेऽवन्तिसुन्दरी नाम मानसारनन्दिनी प्रियवयस्यया बालचन्द्रिकया सह नगरोपान्तरम्योद्याने विहारोत्कण्ठया पौरसुन्दरीसमवायसमन्वितां कस्यचिच्चूत-पोतकस्य च्छायाशीतले सैकततले गन्धकुसुमहरिद्राक्षत-चीनाम्बरादिनानाविधेन परिमलद्रव्यनिकरेण मनोभवमर्चयन्ती रेमे।

तत्र रतिप्रतिकृतिमवन्तिसुन्दरीं द्रष्टुकाम: पुष्पोद्भवसमन्वितो राजवाहनस्तदुपवनं प्रविश्य तत्र तत्र रसालतरुषु कोकिलकीरालिकुलमधुकराणामालापान् श्रावं श्रावं

अमन्दलीलया ललनासमीपमगाप। बालचन्द्रिकया 'निःशङ्कमित आगम्यताम्' इति हस्तसंज्ञया समाहूतो निजतेजोनिर्जितपुरुहूतो राजवाहनः कृशोदर्या अवन्तिसुन्दर्या अन्तिकं समाजगाम।

'ललनाजनं सृजता विधात्रा नूनमेषा घुणाक्षरन्यायेन[1] निर्मिता। नो चेदब्जभूरेवंविधनिर्माणनिपुणो यदि स्यात्तर्हि तत्समानलावण्यामन्यां तरुणीं किं न करोति?' इति सविस्मयानुरागं विलोकयतस्तस्य समक्षं स्थातुं लज्जिता सती किंचित्सखीजनान्तरितगात्रा राजवाहनं विलोकयन्त्यतिष्ठत्। सा मनसीत्थमचिन्तयत्—'अनन्यसाधारणसौन्दर्येणानेन कस्यां पुरि भाग्यवतीनां तरुणीनां लोचनोत्सवः क्रियते? पुत्ररत्नेनामुना पुरंध्रीणां पुत्रवतीनां सीमन्तिनीनां का नाम सीमन्तमौक्तिकीक्रियते? कास्य देवी? किमत्रागमनकारणमस्य?' इति।

ततो बालचन्द्रिका तयोरन्तरङ्गवृत्तिं भावविवेकैर्ज्ञात्वा कान्तासमाजसन्निधौ राजनन्दनोदन्तस्य सम्यगाख्यानमनु-

---

[1] यथा घुणसंज्ञः कीटः काष्ठं विध्यन् अक्षराकृतिं निर्मातुं यदृच्छया कदापि प्रभवति, तथा; काकतालीयन्यायेन इत्यर्थः। ललनाकुलस्यानवरतनिर्माणेन दैवादीदृशी रमणी विधातुर्हस्तान् निर्गलितेति भावः।

चितमिति लोकसाधारणैर्वाक्यैरभाषत—'भर्तृदारिके, अयं सकलकलाप्रवीणो देवतासान्निध्यकरण आह्ववनिपुणो भूसुरकुमारो मणिमन्त्रौषधिज्ञः परिचर्यार्हो भवत्या पूज्यताम्' इति।

तदाकर्ण्य सन्तुष्टान्तरङ्गा राजकन्या कुमारं समुचितासनासीनं विधाय सखीहस्तेन शस्तेन गन्धकुसुमाक्षतघनसारताम्बूलादिवस्तुनिचयेन पूजां तस्मै कारयामास।

राजवाहनोऽप्येवमचिन्तयत्—'नूनमेषा पूर्वजन्मनि मे जाया यज्ञवती। नो चेदेतस्यामेवंविधोऽनुरागो मन्मनसि न जायेत। शापावसानसमये तपोनिधिदत्तं जातिस्मरत्वमावयोः समानमेव। तथापि कालजनितविशेषसूचकवाक्यैरस्या ज्ञानमुत्पादयिष्यामि।'

तस्मिन्नेव समये कोऽपि मनोरमो राजहंसस्तदुपकण्ठमगमत्। समुत्सुकया राजकन्यया मरालग्रहणे नियुक्तां बालचन्द्रिकामवलोक्य 'समुचितो वाक्यावसरः' इति सम्भाषणनिपुणो राजवाहनः सलीलमलपत्—'सखि, पुरा शाम्बो नाम कश्चिन्महीवल्लभो मनोवल्लभया सह कमलाकरमवाप्य तत्र कोकनदकदम्बसमीपे निद्राधीनमानसं राजहंसं शनैर्गृहीत्वा बिसगुणेन तस्य चरणयुगलं निगडयित्वा कान्तामुखं सानुरागं विलोकयन् मन्दस्मितविकसितैककपोलमण्डलस्तामभाषत—"इन्दुमुखि, मया बद्धो मरालः शान्तो मुनिवदास्ते। स्वेच्छयानेन

गम्यताम्" इति। सोऽपि राजहंसः शाम्बमशपत्—'महीपाल, यदस्मिन्नम्बुजखण्डेऽनुष्ठानपरायणतया परमानन्देन तिष्ठन्तं नैष्ठिकं मामकारणं राज्यगर्वेणावमानितवानसि तदेतत्पाप्मना रमणीविरहसन्तापमनुभव" इति।

'विषण्णवदनः शाम्बो जीवितेश्वरीविरहमसहिष्णुर्भूमौ दण्डवत् प्रणम्य सविनयमभाषत—"महाभाग, यदज्ञानेनाकरवं तत् क्षमस्व" इति। स तापसः करुणाकृष्टचेतास्तमवदत्—"राजन्, इह जन्मनि भवतः शापफलाभावो भवतु। मद्वचनस्यामोघतया भाविनि जनने शरीरान्तरं गताया अस्याः सरसिजाक्ष्या वल्लभो भूत्वा मुहूर्तद्वयं मच्चरणयुगलबन्धकारितया मासद्वयं शृङ्खलानिगडितचरणो रमणीवियोगविषादमनुभूय पश्चादनेककालं वल्लभया सह राज्यसुखं लभस्व" इति। तदनु जातिस्मरत्वमपि तयोरन्वगृह्णात्। तस्मान्मरालबन्धनं न करणीयं त्वया' इति।

सापि भर्तृदारिका तद्वचनाकर्णनाभिज्ञातस्वपुरातनजननवृत्तान्ता 'नूनमयं मत्प्राणवल्लभः' इति मनसि जानती रागपल्लवितमानसा समन्दहासमवोचत्—'सौम्य, पुरा शाम्बो यद्यवतीसन्देशपरिपालनाय तथाविधं हंसबन्धनमकार्षीत्। तथा हि लोके पण्डिता अपि दाक्षिण्येनाकार्यं कुर्वन्ति' इति कन्याकुमारावेवमन्योन्यपुरातनजननामधेये परिचिते परस्परज्ञानाय साभिज्ञमुक्ता रागपूर्णमानसौ बभूवतुः।

तस्मिन्नवसरे मालवेन्द्रमहिषी परिजनपरिवृता दुहितृ-केलीविलोकनाय तं देशमवाप। बालचन्द्रिका तु तां दूरतो विलोक्य ससम्भ्रमं हस्तसंज्ञया पुष्पोद्भवसेव्यमानं राजवाहनं वृक्षवाटिकान्तरितगात्रमकरोत्। सा मानसारमहिषी सखीसमेताया दुहितुर्नानाविधां विहारलीलामनुभवन्ती क्षणं स्थित्वा दुहित्रा समेता निजागारगमनायोद्युक्ता बभूव।

राजवाहनोऽपि यत्र हृदयवल्लभावलोकनसुखमलभत तदुद्यानं विरहविनोदाय पुष्पोद्भवसमन्वितो जगाम। तस्मिन्नवसरे धरणीसुर एकः सूक्ष्मचित्रनिवसनः स्फुरन्मणिकुण्डलमण्डितो मुण्डितमस्तकमानवसमेतश्चतुर-वेषमनोरमो यदृच्छया समागतः समन्ततोऽभ्युल्लसत्तेजो-मण्डलं राजवाहनमाशीर्वादपूर्वकं ददर्श। राजा[1] सादरम् —'को भवान्? कस्यां विद्यायां निपुणः?' इति तं पप्रच्छ। स च 'विद्येश्वरनामधेयोऽहमैन्द्रजालिकविद्या-कोविदो विविधदेशेषु राजमनोरञ्जनाय भ्रमन्नुज्जयिनीमद्या-गतोऽस्मि' इति शशंस। पुनरपि राजवाहनं सम्यगालोक्य 'अस्यां लीलावनौ पाण्डुरतानिमित्तं किम्?' इति साभिप्रायं विहस्यापृच्छत्। पुष्पोद्भवश्च निजकार्यकरणं तर्कयन्नेन-मादरेण बभाषे—'ननु सतां सख्यस्याभाषणपूर्वतयाचिरं

---

[1] "नामैकदेशग्रहणेन नाममात्रग्रहणम्" इति न्यायेन वा, "भाविनि भूतवदारोपः" इति न्यायेन वा राजन्-शब्देन राजवाहनस्य व्यपदेशः।

रुचिरभाषणो भवानस्माकं प्रियवयस्यो जातः। सुहृदामकथ्यं च किमस्ति ? केलीवनेऽस्मिन् वसन्तमहोत्सवायागताया मालवेन्द्रसुताया राजनन्दनस्यास्य चाकस्मिकदर्शनेऽन्योन्यानुरागातिरेकः समजायत। परिणयविध्युपायाभावेनासावीदृशीमवस्थामनुभवति' इति।

विद्येश्वरो लज्जाभिरामं राजकुमारमुखमभिवीक्ष्य विरचितमन्दहासो व्याजहार—'देव, भवदनुचरे मयि तिष्ठति तव कार्यमसाध्यं किमस्ति ? अहमिन्द्रजालविद्यया मालवेन्द्रं मोहयन् पौरजनसमक्षमेव तत्तनयापरिणयं रचयित्वा कन्यान्तःपुरप्रवेशं कारयिष्यामीति वृत्तान्त एष राजकन्यकायै सखीमुखेन पूर्वमेव कथयितव्यः' इति। सन्तुष्टमना महीपतिरनिमित्तमित्रं प्रकटीकृतकृत्रिमक्रियापाटवं विप्रलम्भकृत्रिमप्रेमसहजसौहार्दवेदिनं तं विद्येश्वरं सबहुमानं विससर्ज।

अथ राजवाहनो विद्येश्वरस्य क्रियापाटवेन फलितमिव मनोरथं मन्यमानः पुष्पोद्भवेन सह स्वमन्दिरमुपेत्य सादरं बालचन्द्रिकामुखेण निजवल्लभाय महीसुरक्रियमाणं विवाहोपायं वेदयित्वा कौतुकाकृष्टहृदयः 'कथमिमां क्षपां क्षपयामि' इत्यतिष्ठत्।

परेद्युः प्रभाते विद्येश्वरो महता निजपरिजनेन सह राजभवनद्वारान्तिकमुपेत्य दौवारिकनिवेदितनिजवृत्तान्तः सहसोपगम्य सप्रणामम् 'ऐन्द्रजालिकः समागतः' इति

द्वाःस्थैर्विज्ञापितेन तद्दर्शनकुतूहलाविष्टेन समुत्सुकावरोध-सहितेन मालवेन्द्रेण समाहूयमानो विद्येश्वरः कक्षान्तरं प्रविश्य सविनयमाशिषं दत्त्वा तदनुज्ञातः परिजनताड्य-मानेषु वाद्येषु नदत्सु, गायिकासु मदकलकोकिलामञ्जुल-ध्वनिषु, समधिकरागरञ्जितसामाजिकमनोवृत्तिषु पिञ्छिका-भ्रमणेषु सपरिवारं परिवृढं भ्रामयन्[1] मुकुलितनयनः क्षणमतिष्ठत्।

तदनु विषमं विषमुल्बणं वमन्तः फणालङ्करणा रत्नराजिनीराजितराजमन्दिराभोगा भोगिनो भयं जनयन्तो निश्चेरुः। गृध्राश्च बहुवस्तुखण्डैरहिपतीनादाय दिवि सम-चरन्। ततोऽग्रजन्मा नरसिंहस्य हिरण्यकशिपोर्दैत्ये-श्वरस्य विदारणमभिनीय महदाश्चर्यान्वितं[2] राजानमभाषत —'राजन्, अवसानसमये भवता शुभसूचकं द्रष्टुमुचितम्। ततः कल्याणपरम्परावाप्तये भवदात्मजाकारायास्तरुण्या निखिललक्षणोपेतस्य राजनन्दनस्य विवाहः कार्यः' इति।

तदवलोकनकुतूहलेन महीपालेनानुज्ञातः स सङ्कल्पितार्थसिद्धिसम्भावनसम्फुल्लवदनः सकलमोहजनक-मञ्जनं लोचनयोर्निक्षिप्य परितो व्यलोकयत्। सर्वेषु

---

[1] "मितां ह्रस्वः" इति सूत्रे "वा चित्तविरागे" इत्यतो वेत्यनुवृत्तौ व्यवस्थितविभाषाश्रयणादत्र ह्रस्वाभावः।

[2] महाश्चर्यान्वितम् इति साधु।

'तदैन्द्रजालिकमेव कर्म' इति साद्भुतं पश्यत्सु रागपल्लवित-हृदयेन राजवाहनेन पूर्वसङ्केतसमागताम् अनेकभूषणभूषिताङ्गीम् अवन्तिसुन्दरीं वैवाहिकमन्त्रतन्त्रनैपुण्येनाग्निं साक्षीकृत्य संयोजयामास।

क्रियावसाने सति 'इन्द्रजालपुरुषाः, सर्वे गच्छन्तु भवन्तः' इति द्विजन्मनोच्चैरुच्यमाने सर्वे मायामानवा यथायथमन्तर्भावं गताः। राजवाहनोऽपि पूर्वसङ्कल्पितेन गूढोपायचातुर्येणैन्द्रजालिकपुरुषवत् कन्यान्तःपुरं विवेश। मालवेन्द्रोऽपि तदद्भुतं मन्यमानस्तस्मै वाडवाय प्रचुरतरं धनं दत्त्वा विद्येश्वरम् 'इदानीं साधय' इति विसृज्य स्वयमन्तर्मन्दिरं जगाम। ततोऽवन्तिसुन्दरी प्रियसहचरीवरपरिवारा वल्लभोपेता सुन्दरं मन्दिरं ययौ। एवं दैवमानुषबलेन मनोरथसाफल्यमुपेतो राजवाहनः चित्त-हारिणं चतुर्दशभुवनवृत्तान्तं श्रावयामास।

इति श्रीदण्डिनः कृतौ दशकुमारचरितेऽवन्तिसुन्दरीपरिणयो नाम पञ्चम उच्छ्वासः।

---

# राजवाहनचरितम्

## [ प्रथम उच्छ्वासः ]

श्रुत्वा तु भुवनवृत्तान्तमुत्तमाङ्गना विस्मयविकसिताक्षी सस्मितमिदमभाषत—'दयित, त्वत्प्रसादादद्य मे चरितार्था श्रोत्रवृत्तिः। अद्य मे मनसि तमोपहस्त्वया दत्तो ज्ञान-प्रदीपः। पक्वमिदानीं त्वत्पादपद्मपरिचर्याफलम्। अस्य च त्वत्प्रसादस्य किमुपकृत्य प्रत्युपकृतवती भवेयम्? अभवदीयं हि नैव किञ्चिन्मत्सम्बद्धम्।'

सुप्तयोस्तु तयोः स्वप्ने बिसगुणनिगडितपादो जरठः कश्चिज्जालपादोऽदृश्यत। प्रत्यबुध्येतां चोभौ। अथ तस्य राजकुमारस्य कमलमृदग्रियिकिरणरज्जुदामनिगृहीतमिव रजतशृङ्खलोपगूढं चरणयुगलमासीत्। उपलभ्यैव च 'किमेतत्' इत्यतिपरित्रासविह्वला मुक्तकण्ठमाचक्रन्द राजकन्या। येन च तत्सकलमेव कन्यान्तःपुरमग्नि-परीतमिव पिशाचोपहतमिव वेपमानम् अनिरूप्यमाण-तदात्वायतिविभागम् अगण्यमानरहस्यरक्षासमयम् अवनि-तलविप्रविध्यमानगात्रम् आक्रन्दविदीर्यमाणकण्ठम् अश्रुस्रोतोऽवगुण्ठितकपोलतलम् आकुलीबभूव।

तुमुले चास्मिन् समयेऽनियन्त्रितप्रवेशाः 'किं किम्'

इति सहसोपसृत्य विविशुरन्तर्वंशिकपुरुषाः, ददृशुश्च तदवस्थं राजकुमारम्। तदनुभावनिरुद्धनिग्रहेच्छास्तु सद्य एव ते तमर्थं चण्डवर्मणे निवेदयाञ्चक्रुः। सोऽपि कोपादागत्य निर्दहन्निव दहनगर्भया दृशा निशाम्योत्पन्न-प्रत्यभिज्ञः 'कथं स एवैष मदनुजमरणनिमित्तभूतायाः पापाया बालचन्द्रिकायाः पत्युरत्यभिनिविष्टवित्तदर्पस्य वैदेशिकवणिक्पुत्रस्य पुष्पोद्भवस्य मित्रं रूपमत्तः कलाभि-मानी नैकविधविप्रलम्भोपायपाटवावर्जितमूढपौरजनमिथ्या-रोपितवितथदैवतानुभावः कपटधर्मकञ्चुको निगूढपापशील-श्चपलो ब्राह्मणब्रुवः! कथमिवैनम[1]नुरक्ता मादृशेष्वपि पुरुषसिंहेषु सावमाना पापीयमवन्तिसुन्दरी! पश्यतु पतिमद्यैव शूलावतंसितमियमनार्यशीला कुलपांसनी' इति निर्भर्त्सयन् भीषणभ्रूकुटिदूषितललाटः काल इव काललोह-दण्डकर्कशेन बाहुदण्डेनावलम्ब्य हस्ताम्बुजे रेखाम्बुज-रथाङ्गलाञ्छने राजपुत्रं सरभसमाचकर्ष।

स तु स्वभावधीरः सर्वपौरुषातिभूमिः सहिष्णुतैकं-प्रतिक्रियां दशामिव तामापदमवधार्य 'स्मर तस्या हंस-गामिनि हंसकथायाः। सहस्व वासु मासद्वयम्' इति प्राणपरित्यागरागिणीं प्राणसमां समाश्वास्यारविश्वसता-मयासीत्।

---

[1] एनम्—अध्याक्रियमाण-प्रतिशब्दयोगे द्वितीया ; यद्वा, अनोः कर्म-प्रवचनीयत्वम्, तद्योगे द्वितीया।

अथ विदितवार्तावार्तौ महादेवीमालवेन्द्री जामातरमाकारपक्षपातिनावात्मपरित्यागोपन्यासेनारिणा जिघांस्यमानं ररक्षतुः, न शेकतुस्तु तमप्रभुत्वादुत्तारयितुमापदः। स किल चण्डशीलश्चण्डवर्मा सर्वमिदमुदन्तजातं राजराजगिरौ तपस्यते दर्पसाराय सन्दिश्य सर्वमेव पुष्पोद्भवकुटुम्बकं सर्वस्वहरणपूर्वकं सद्य एव बन्धने क्षिप्त्वा कृत्वा च राजवाहनं राजकेशरिकिशोरकमिव दारुपञ्जरनिबद्धं मूर्धजजालविलीनचूडामणिप्रभावविक्षिप्तक्षुत्पिपासादिखेदं च तमवधूतदुहितृप्रार्थनस्याङ्गराजस्योद्धरणायाङ्गान् अभियास्यन्ननन्यविश्वासात्त्विनाय, रुरोध च वलभरदत्तकम्पश्चम्पाम्।

चम्पेश्वरोऽपि सिंहवर्मा सिंह इवासह्यविक्रमः प्राकारं भेदयित्वा महता बलसमुदायेन निर्गत्य स्वप्रहितदूतव्राताहूतानां साहाय्यदानायातिसत्वरमापततां धरापतीनामचिरकालभाविन्यपि सन्निधावदत्तापेक्षः साक्षादिवावलेपो वपुष्मानक्षमापरीतः प्रतिबलं प्रतिजग्राह। जगृहे च महति सम्पराये क्षीणसकलसैन्यमण्डलः प्रचण्डप्रहरणशतभिन्नमर्मा सिंहवर्मा करिणः करिणमवप्लुत्यातिमानुषप्राणबलेन चण्डवर्मणा।

स च तद्दुहितर्यम्बालिकायामबलारत्नसमाख्याताया-मतिमात्राभिलाषः प्राणैरेनं न व्ययूयुजत्, अपि त्वनीनयदपनीताशेषशल्यमकल्यसन्धो बन्धनम्। अजीगणच्च गणकसङ्घैः 'अद्यैव क्षपावसाने विवाहनीया राजदुहिता' इति।

कृतकौतुकमङ्गले च तस्मिन्नेकपिङ्गाचलात् प्रति-निवृत्त्येषजङ्घो नाम जङ्घाकरिकः प्रभवतो दर्पसारस्य प्रतिसन्देशमावेदयत्—'अयि मूढ, किमस्ति [दुर्वृत्तेऽस्मिन्] कश्चित्कृपावसरः? स्थविरः स राजा जराविलुप्यमानावमानचित्तो दुश्चरितदुहितृपक्षपाती यदेव किञ्चित् प्रलपति त्वयापि किं तदनुमत्या स्थातव्यम्? अविलम्बितमेव तस्य दुरात्मनश्चित्रवधवार्ताप्रेषणेन श्रवणोत्सवोऽस्माकं विधेयः। सा च दुष्टकन्या सहानुजेन कीर्तिसारेण निगडितचरणा चारके निरोद्धव्या' इति।

तच्चाकर्ण्य 'प्रातरेव राजभवनद्वारे स च दुरात्मा सन्निधापयितव्यः। चण्डपोतश्च मातङ्गपतिरुचितकल्पनोपपन्नस्तत्रैव समुपस्थापनीयः। कृतविवाहकृत्यश्चोत्थायाहमेव तमनार्यशीलं तस्य हस्तिनः कृत्वा क्रीडनकं तदधिरूढ एव गत्वा शत्रुसाहायकाय प्रत्यासीदतो राजन्यकस्य सकोशवाहनस्यावग्रहणं करिष्यामि' इति पार्श्वचरानविज्ञापयच्चक्रे।

निन्ये चासावहन्यन्यस्मिन्नुन्मिषत्येवोष्णरोचिषि राजपुत्रो राजाङ्गनं रक्षिभिः; उपतस्थे च क्षरितगण्डश्चण्डपोतः; क्षणे च तस्मिन्मुमुचे तदङ्घ्रियुगलं रजतशृङ्खलया।

सा चैनं चन्द्रलेखाच्छविः काचिदप्सरा भूत्वा प्रदक्षिणीकृत्य प्राञ्जलिर्व्यजिज्ञपत्—'देव, दीयतामनुग्रहार्द्रं चित्तम्। अहमस्मि सोमरश्मिसम्भवा सुरतमञ्जरी नाम सुरसुन्दरी। तस्या मे नभसि नलिनलुब्धमुग्धकलहंसानुबद्धवक्त्राया-

स्तन्निवारणचोभविच्छिन्नविगलिता हारयष्टिर्यदृच्छया जातु हैमवते मन्दोदके मग्नोन्मग्नस्य महर्षेर्मार्कण्डेयस्य मस्तके मणिकिरणद्विगुणितपलितमपतत्। पातितश्च कोपितेन कोऽपि तेन मयि शापः—"पापे, भजस्व लोह-जातिमजातचैतन्या सती" इति।

'स पुनः प्रसाद्यमानस्त्वत्पादपद्मद्वयस्य मासद्वयमात्रं सन्दानतामेत्य निस्तरणीयामिमामापदमपरिक्षीणशक्तित्वं चेन्द्रियाणामकल्पयत्। अनल्पेन च पाप्मना रजत-शृङ्खलीभूतां मामैक्ष्वाकस्य राज्ञो वेगवतः पौत्रः, पुत्रो मानसवेगस्य, वीरशेखरो नाम विद्याधरः शङ्करगिरौ समभ्यगमत्। आत्मसात्कृता च तेनाहमासम्।

'अथासौ पितृप्रयुक्तवैरे प्रवर्त्तमाने विद्याधरचक्रवर्तिनि वत्सराजवंशवर्धने नरवाहनदत्ते विरसाशयस्तदपकार-क्षमोऽयमिति तपस्यता दर्पसारेण सह समसृज्यत। प्रतिश्रुतं च तेन तस्मै स्वसुरवन्तिसुन्दर्याः प्रदानम्।

'अन्यदा तु वियति व्यवदायमानचन्द्रिके मनोरथप्रियतमामवन्तिसुन्दरीं दिदृक्षुस्तदिन्द्रमन्दिर-द्युति कुमारीपुरमुपासरत्। अन्तरितस्तिरस्करिण्या विद्यया स च तां तदा त्रिभुवनसर्गयात्रा-संहारसम्बद्धाभिः कथाभिरस्मत्स्वन्दिनीभिर्विनोद्यमानां न्यरूपयत्। स तु प्रकुपितोऽपि त्वदनुभावप्रतिबद्धनिग्रहा-न्तराध्यवसायः सुखसुप्तयोर्युवयोर्दैवदत्तोत्साहः पाण्डलोह-

शृङ्खलात्मना मया पादपद्मयोर्युगलं तव निगडयित्वा सरोषरभसमपासरत्। अवसितश्च ममाद्य शापः। तच्च मासद्वयं तव पारतन्त्र्यम्। प्रसीदेदानीम्। किं तव करणीयम्?' इति प्रणिपतन्तीं 'वार्तयानया मत्प्राणसमां समाश्वासय' इति व्यादिश्य विससर्ज।

तस्मिन्नेव क्षणान्तरे 'हतो हतश्चण्डवर्मा सिंहवर्मदुहितुरम्बालिकायाः पाणिस्पर्शरागप्रसारिते बाहुदण्ड एव बलवदवलम्ब्य सरभसमाकृष्य केनापि दुष्करकर्मणा तस्करेण नखप्रहारेण; राजमन्दिरोद्देशे च प्रवग्रतमयमापादयन्नचकितगतिरसौ विहरति' इति वाचः समभवन्।

श्रुत्वा चैतत्तमेव मत्तहस्तिनमुदस्ताधोरणो राजपुत्रोऽधिरुह्य रंहसोत्तमेन राजभवनमभ्यवर्तत। स्तम्बेरमरयावधूतपदातिदत्तवर्त्मा च प्रविश्य वेश्माभ्यन्तरमदभ्राभ्रनिर्घोषगम्भीरेण स्वरेणाभ्यधात्—'कः स महापुरुषो येनैतन्मानुषमात्रदुष्करं महत्कर्मानुष्ठितम्? आगच्छतु, मया सहेमं मत्तहस्तिनमारोहतु। अभयं मदुपकण्ठवर्तिनो देवदानवैरपि विग्रहानस्य' इति।

निशम्यैवं स पुमानुपोढहर्षो निर्गत्य कृताञ्जलिराक्रम्य संत्रासंकुचितं कुञ्जरगात्रमसक्तमभ्यरुचत्। आरोहन्तमेवेनं निर्वर्ण्य हर्षोत्फुल्लदृष्टिः 'अये, प्रियसखोऽयमपहारवर्मैव' इति पश्चान्निषीदतोऽस्य बाहुदण्डयुगलमुभयभुजमूलप्रवेशितमग्रेऽवलम्ब्य स्वमङ्गमालिङ्गयामास। स्वयं च

पृष्ठतो वलिताभ्यां भुजाभ्यां पर्यवेष्टयत्। तत्क्षणोपसंहृतालिङ्गनव्यतिकरश्चापहारवर्मा बलावलिमान् प्रतिबलवीरान् बहुप्रकारायोधिनः परिक्षिपतः क्षितौ विचिक्षेप। क्षणेन चाद्राक्षीत्तदपि सैन्यमन्येन समन्ततोऽभिमुखमभिधावता बलनिकायेन परिक्षिप्तम्।

अनन्तरं च कश्चित्कर्णिकारगौरः कुरुविन्दसवर्णकुन्तलः कमलकोमलपाणिपादः कर्णचुम्बिदुग्धधवलस्निग्धनीललोचनः कटितटनिविष्टरत्ननखः पट्टनिवसनः कृशाकृशोदरोरःस्थलः कृतहस्ततया रिपुकुलमिषुवर्षेणाभिवर्षन् पादाङ्गुष्ठनिष्ठुरावघृष्टकर्णमूलेन प्रजविना गजेन सन्निकृष्य पूर्वोपदेशप्रत्ययात् 'अयमेव स देवो राजवाहनः' इति प्राञ्जलिः प्रणम्यापहारवर्मणि निविष्टदृष्टिराचष्ट—'त्वदादिष्टेन मार्गेण सन्निपातितमेतदङ्गराजसाहाय्यदानायोपस्थितं राजकम्। अखिलं च विहतविध्वस्तं स्त्रीबालहार्यशस्त्रं वर्तते। किमन्यत्कृत्यम्' इति।

हृष्टस्तु व्याजहारापहारवर्मा—'देव, दृष्टिदानेनानुगृह्यतामयमाम्नाकरः। सोऽयमेव ह्यमुना रूपेण धनमित्राख्यया चान्तरितो मन्तव्यः। स एवायं निर्गमय्य बन्धनादङ्गराजमपवर्जितं च कोशवाहनमेकीकृत्यास्मद्गृह्येणामुना सह राजन्यकेनैकान्ते सुखोपविष्टमिह देवमुपतिष्ठतु यदि न दोषः' इति।

देवोऽपि 'यथा ते रोचते' इति तमाभाष्य गत्वा च

तन्निर्दिष्टेन मार्गेण नगराद्बहिरतिमहतो रोहिणद्रुमस्य कस्यचित् क्षौमावदातसैकते गङ्गातरङ्गपवनपातशीतले तले द्विरदादवततार। प्रथमसमवतीर्णेनापहारवर्मणा च स्वहस्तसत्वरसमीकृते मातङ्ग इव भागीरथीपुलिनमण्डले सुखं निषसाद।

तथा निषण्णं च तमुपहारवर्मार्थपालप्रमतिमित्रगुप्तमन्त्रगुप्तविश्रुतैर्मैथिलेन च प्रहारवर्मणा, काशीभर्त्रा च कामपालेन, चम्पेश्वरेण च सिंहवर्मणा, सहोपागत्य धनमित्रः प्रणिपपात। देवोऽपि हर्षाविद्धमभ्युत्थितः 'कथं समस्त एष मित्रगणः समागतः, को नामायमभ्युदयः' इति कृतयथोचितोपचारान्निर्भरतरं परिरेभे। काशीपतिमैथिलाङ्गराजांश्च सुहृन्निवेदितान् पितृवदपश्यत्। तैश्च हर्षकम्पितपलितं सरभसोपगूढः परमभिननन्द।

ततः प्रवृत्तासु प्रीतिसङ्कथासु प्रियवयस्यगणानुयुक्तः स्वस्य सोमदत्त-पुष्पोद्भवयोश्च चरितमनुवर्ण्य, सुहृदामपि वृत्तान्तं क्रमेण श्रोतुं कृतप्रस्तावः, तांश्च तदुक्तावन्वयुङ्क्त।

इति श्रीदण्डिनः कृतौ दशकुमारचरिते राजवाहनचरितं
नाम प्रथम उच्छ्वासः।

———

# उपहारवर्म्मचरितम्

## [ तृतीय उच्छ्वासः ]

'एषोऽस्मि पर्य्यटन्नेकदा गतो विदेहेषु। मिथिलामप्रविश्यैव बहिः क्वचिन्मठिकायां विश्रमितुमेत्य, कयापि वृद्धतापस्या दत्तपाद्यः क्षणमलिन्दभूमाववास्थिषि। तस्यास्तु मद्दर्शनादेव किमप्याबद्धधारमश्रु प्रावर्त्तत।

' "किमेतदम्ब कथय कारणम्" इति पृष्टा सकरुणमाचष्ट, "जैवातृक, ननु श्रूयते पतिरस्या मिथिलायाः प्रहारवर्म्मा नामासीत्; तस्य खलु मगधराजो राजहंसः परं मित्रमासीत्। तयोश्च वल्लभे वसुमती-प्रियंवदे सख्यमप्रतिममधत्ताम्। अथ प्रथमगर्भाभिनन्दितां प्रियसखीं वसुमतीं दिदृक्षुः प्रियंवदा सह भर्त्रा पुष्पपुरमगमत्।

"तस्मिन्नेव च समये मालवेन मगधराजस्य महज्जन्यमजनि। तत्र क्लिश्यतोऽपि दुर्लच्यां गतिमगमन्मगधराजः। मैथिलस्तु मालवेन्द्रप्रयत्नप्राणितः स्वविषयं प्रतिनिवृत्तो जेष्ठस्य संहारवर्म्मणः सुतैर्विकटवर्म्मप्रभृतिभिर्व्याप्तं राज्यमाकर्ण्य, स्वस्रीयात् सुह्मपतेर्दण्डावयवमादित्सुः, अटवीपथमवगाह्य, लुब्धकलुप्तसर्व्वस्वोऽभूत्।

"तत्सुतेन च कनीयसा हस्तवर्त्तिना सहैकाकिनी वनचरशरवर्षभयपलायिता वनमगाहिषि। तत्र च मे शार्दूलनखावलीढनिपतितायाः पाणिभ्रष्टः स बालकः कस्यापि कपिलाशवस्य क्रोडमभ्यलीयत। तच्छवाकर्षिणश्च व्याघ्रस्यासूनिषुरिष्वसनयन्त्रमुक्तः क्षणाद् अलिक्षत्; भिल्लदारकैश्च बालोऽपाहारि।

"सा त्वहं मोहसुप्ता, केनापि वृष्णिपालेनोपनीय स्वं कुटीरमाविश्य कृपयोपक्रान्तव्रणा, स्वस्थीभूय स्वभर्त्तुरन्तिकमुपतिष्ठासुरसहायतया यावद् व्याकुलीभवामि, तावन्ममेव दुहिता सह यूना केनापि तमेवोद्देशमागमत्।

"सा भृशं रुरोद। रुदितान्ते च सा सार्थघाते स्वहस्तगतस्य राजपुत्रस्य किरातभर्त्तृहस्तगमनम्, आत्मनश्च केनापि वनचरेण व्रणविरोपणम्, स्वस्थायाश्च पुनस्तेनोपयन्तुं चिन्तिताया निकृष्टजातिसंसर्गवैक्लव्यात् प्रत्याख्यानपारुष्यम्, तद्द्वेषिण चासुना विविक्ते विपिने स्वशिरःकर्त्तनोद्यमनम्,[1] अनेन यूना यदृच्छया दृष्टेन तस्य दुरात्मनो हननम्, आत्मनश्चोपयमनम् इत्यकथयत्।

---

[1] अत्र समासश्चिन्त्यः "कर्म्मणि च" इति षष्ठीसमासप्रतिषेधात्; न चात्र समासान्तरं स्वीकर्त्तव्यम्, शेषषष्ठ्या वा समासः, तथात्वे 'असुना' इत्यत्र तृतीयानुपपत्तेः। वस्तुतस्तु समासप्रतिषेधकशास्त्राणि सर्व्वत्र न समाद्रियन्ते कवय इति सङ्क्षेपमवदातम्।

"स तु पृष्टो मिथिलेन्द्रस्यैव कोऽपि सेवकः कारण-विलम्बी तन्मार्गानुसारी जातः। सह तेन भर्त्तुरन्तिक-मुपस्थत्य पुत्त्रवृत्तान्तेन श्रोत्रमस्य देव्याः प्रियंवदायाश्चा-दहाव। स च राजा दिष्टदोषाज्ज्येष्ठभ्रातुः पुत्त्रैश्चिरं विगृह्य, पुनरसहिष्णुतयातिमात्रं चिरं प्रयुध्य बद्धः, देवी च बन्धनं गमिता।

"दग्धा पुनरहमस्मिन्नपि वार्द्धके हतजीवितमपारयन्ती हातुं प्रव्रज्यां किलाग्रहीषम्; दुहिता तु मम विकटवर्म्म-महादेवीं कल्पसुन्दरीं किलाशिश्रियत्। तौ चेद्राजपुत्त्रौ निरुपद्रवावेवावर्धिष्येताम्, इयता कालेन तवेमां वयोऽवस्थामस्प्रक्ष्यताम्[1]। तयोश्च सतोर्न दायादा नरेन्द्रस्य प्रसह्यकारिणोऽभविष्यन्" इति प्रमन्युरभिरुरोद।

'श्रुत्वा च तापसीगिरमहमपि प्रवृद्धबाष्पो निगूढम-भ्यधाम्, "यद्येवम् अम्ब समाश्वसिहि। नन्वस्ति कश्चिन्मुनिस्त्वया तदवस्थया पुत्राभ्युपपादनार्थं याचितः, तेन स लब्धो वर्द्धितश्च। वार्त्तेयमतिमहती; किमनया? सोऽहमस्मि। अवश्य मयासौ विकटवर्म्मा यथाकथञ्चि-दुपश्लिष्य व्यापादयितव्यः; अनुजाः पुनरतिबहवः, तैरपि घटन्ते पौरजानपदाः। मां तु न कश्चिदिहत्य

---

[1] मुद्रितेष्वमुद्रितेषु च पुस्तकेषु समसेव समुपलभ्यमानः 'अस्पृक्ष्येताम्' इति पाठो लिपिकरप्रमादकृतः।

ईदृक्तया जनो जानाति। पितरावपि तावदित्थं न संविदाते, किमुतेतरे? तदेनमर्थमुपायेन साधयिष्यामि" इत्यगादिषम्।

'सा तु वृद्धा सरुदितं परिष्वज्य, मुहुः शिरस्युपाघ्राय प्रस्नुतस्तनी, सगद्गदमगदत्, "वत्स, चिरं जीव, भद्रं तव; प्रसन्नोऽद्य भगवान् विधिः। अद्यैव प्रहारवर्म्मण्यधि विदेहा जाताः, यतः प्रलम्बमानपीनबाहुर्भवान् अपारमेतं शोकसागरमद्योत्तारयितुं स्थितः। अहो! महद् भागधेयं देव्याः प्रियंवदायाः" इति हर्षनिर्भरा स्नानभोजनादिना मामुपाचरत्।

'अशिश्रियं चास्मिन् मठैकदेशे निशि कटशय्याम्। अचिन्तयं च, "विनोपधिनायमर्थो न साध्यः; तदस्य राज्ञो वृत्तान्तमशेषं सम्यगवगम्य किञ्चिज्जालमाचरेयम्" इति। इति चिन्तयत्येव मयि महार्णवोन्मग्नमार्तण्डतुरङ्गमश्वासरयावधूतेव व्यावर्त्तत त्रियामा। समुद्रगर्भवासजडीकृत इव मन्दप्रतापो दिवसकरः प्रादुरासीत्।

'उत्थाय, अवसायितदिनमुखनियमविधिः, तां मे मातरमवादिषम्, "अम्ब, जाल्मस्य विकटवर्म्मणः कच्चिद् वृत्तान्तमभिजानासि?" इति।

'अनवसितवचन एव मयि काचिदङ्गना प्रत्यदृश्यत। तां चावेक्ष्य सा मे धात्री हर्षाश्रुकुण्ठितकण्ठमाचष्ट,

"पुत्त्रि[1] पुष्करिके, पश्य भर्त्तृदारकम्। अयमसावकृपया मया वने परित्यक्तः पुनरप्येवमागतः" इति। सा तु हर्षनिर्भरनिपीडिता चिरं प्ररुद्य, बहु विलप्य, शान्ता पुनः स्वमात्रा राजवृत्तान्ताख्याने न्ययुज्यत।

[ ततश्च तद्वदनावेदिताशेषराजरहस्येन क्रमेण मया चित्रैरुपायैर्निहत्य विकटवर्म्माणं बन्धनाच्च निष्क्रमय्य पितरौ स्वं राज्यं समधिगतम्। ]

'अहं च तया मे धात्र्या सर्व्वमिदं मम चेष्टितं रहसि पित्रोरवगमय्य प्रहर्षकाष्ठाधिरूढयोस्तयोः पादमूलमभजे; अभ्यषिच्ये च यौवराज्यलक्ष्म्या तदनुज्ञातया। ततः प्रसाधितात्मा देवपादविरहदुःखदुर्भगान् भोगान् निर्विशन्, भूयोऽस्य पितृसखस्य सिंहवर्म्मणो लेख्याच्चण्डवर्म्मण-चम्पाभियोगम[2]वगम्य, "शत्रुवधो मित्ररक्षा चोभयम[3]पि करणीयमेव" इत्यलघुना लघुसमुत्थानेन सैन्यचक्रेणाभ्यसरम्; अभवं च भूमिस्त्वत्पादलक्ष्मीसाक्षात्क्रियामहोत्सवानन्दराशेः' इति।

---

[1] पुत्त्रशब्दस्य शार्ङ्गरवादिगणे पाठो बहूनां सम्मतः। तेन ङीन् निर्बाधः।

[2] चम्पाभियोगम् इत्यत्र शेषषष्ठ्या समासः, तेन समासनिषेधशङ्कापि नोदेति, चण्डवर्म्मण इत्यत्र षष्ठ्यप्युपपद्यते।

[3] सामान्ये नपुंसकम्। तथा च कालिदासप्रयोगः—

इयं गतं संप्रति शोचनीयतां समागमप्रार्थनया पिनाकिनः।
कला च सा कान्तिमती कलावतस्त्वमस्य लोकस्य च नेत्रकौमुदी॥

श्रुत्वैतद्देवो राजवाहनः सस्मितमवादीत्, 'पश्यत, किं हि बुद्धिमत्प्रयुक्तं नाभ्युपैति शोभाम् ?' इति। ततोऽर्थपालमुखे निधाय स्निग्धदीर्घां दृष्टिम्, 'आचष्टां भवान् आत्मीयचरितम्' इत्यादिदेश। सोऽपि बद्धाञ्जलिरभिदधे।

इति श्रीदण्डिनः कृतौ दशकुमारचरिते उपहारवर्मचरितं
नाम तृतीय उच्छ्वासः।

---

## अर्थपालचरितम्

[ चतुर्थ उच्छ्वासः ]

'देव, सोऽहमप्येभिरेव सुहृद्भिरेककार्य्योर्म्मिमालिनेमिभूमिवलयं परिभ्रमन् कदाचिदुपासरं काशीपुरीं वाराणसीम्। उपस्पृश्य मणिभङ्गनिर्म्मलाम्भसि मणिकर्णिकायाम्, अविमुक्तेश्वरं भगवन्तमन्धकमथनमभिप्रणम्य, प्रदक्षिणं परिभ्रमन्, पुरुषमेकम् आयामवन्तम् आयसपरिघपीवराभ्यां भुजाभ्यामाबध्यमानपरिकरम् अविरतरुदितोच्छूनताम्रदृष्टिमद्राक्षम्।

'अतर्कयं च, "कर्कशोऽयं पुरुषः; कार्पण्यमिव वर्षति क्षीणतारं चक्षुः, आरम्भश्च साहसानुवादी, नूनमसौ प्राणनिस्पृहः किमपि कष्टं प्रियजनव्यसनमूलं प्रतिपत्स्यते। तत् पृच्छेयमेनम्, अस्ति चेन्ममापि कोऽपि साहाय्यदानावकाशः।"

'तमेनमभ्युपपद्याप्राक्षम्, "भद्र, सन्नाहोऽयं साहसमवगमयति; नो चेद् गोप्यम्, इच्छामि श्रोतुं शोकहेतुम्" इति। स मां सबहुमानं निर्वर्ण्य, "को दोषः? श्रूयताम्" इति क्वचित् करवीरतले मया सह निषण्णः कथामकार्षीत्—

"महाभाग, सोऽहमस्मि पूर्वेषुकामचरः[1] पूर्णभद्रो नाम गृहपतिपुत्रः। प्रयत्नसंवर्धितोऽपि पित्रा दैवच्छन्दानुवर्ती चौर्यवृत्तिरासम्। अथास्यां काशीपुर्यामर्थवर्यस्य कस्यचिद् गृहे चोरयित्वा रूपाभिग्राहितो बद्धः; वध्ये च मयि मत्तहस्ती मृत्युविजयो नाम हिंसाविहारी राजगोपुरोपरितलाधिरूढस्य पश्यतः कामपालनाम्न उत्तमामात्यस्य शासनाज्जनकण्ठरवद्विगुणितघण्टारवो मण्डलितहस्तकाण्डं समभ्यधावत्; अभिपत्य च

---

[1] पूर्वेषुकामः—देशविशेषस्य नाम, तत्र चरति इति पूर्व्वेषुकामचरः—पूर्व्वेषुकामवासी; 'चरेष्टः' इति टः। इषुकामाख्यस्य देशस्य व्याकरणाद् बहिः कुत्राप्यनुपलम्भात् "पूर्व्वेषु कामचरः" इति बहवः पठन्ति, पूर्वदेशेषु स्वेच्छया विचरणशील इति च व्याचक्षते।

मया निर्भयेन निर्भर्त्सितो भीतवन्न्यवर्त्तिष्ट ; भूयश्च नेत्रा जातसंरम्भेण निकामदारुणैर्वाग्दण्डपादपातैरभिमुखीकृतः, मयापि द्विगुणाबद्धमन्युना निर्भर्त्स्याभिहतो निवृत्यापाद्रवत्।

"अथ मयोपेत्य सरभसमाकुष्टो रुष्टः स यन्ता 'हन्त! हतोऽसि, कुञ्जरापसद' इति निशितेन वारणेन वारणं मुहुर्मुहुरभिघ्नन् निर्याणभागे कथमपि मदभिमुखमकरोत्। अथावोचम्, 'अपसरतु द्विपकीट एषः, अन्यः कश्चिन्मातङ्ग-पतिरानीयताम्, येनाहं मुहूर्त्तं विहृत्य, गच्छामि गन्तव्यां गतिम्' इति। दृष्ट्वैव स मां रुष्टमुद्गर्ज्जन्तमुत्क्रान्तयन्तृ-निष्ठुराज्ञः पलायिष्ट।

"मन्त्रिणा पुनरहमाहूयाभ्यधायिषि, 'भद्र, मृत्यु-रेवैष मृत्युविजयो नाम हिंसाविहारी, सोऽयमपि तावत् त्वयैवम्भूतः कृतः। तद् विरम्य कर्म्मणोऽस्मान्मलीमसात्, किमलमसि प्रतिपद्यास्मानार्थ्यवृत्त्या वर्त्तितुम्?' इति। 'यथाज्ञापितोऽस्मि' इति विज्ञापितोऽयं मया, मित्रवन्मय्य-वर्त्तिष्ट।

"पृष्टश्च मयैकदा रहसि जातविश्रम्भेणाभाषत स्व-चरितम्, 'आसीत् कुसुमपुरे राज्ञो रिपुञ्जयस्य मन्त्री धर्म्मपालो नाम विश्रुतधीः श्रुतर्षिः। अमुष्य पुत्त्रः सुमित्रो नाम पित्रेव समः प्रज्ञागुणेषु ; तस्यास्मि द्वैमातुरः कनीयान् भ्राताहम्। वेशेषु विलसन्तं मामसौ विनय-रुचिरवारयत् ; अवार्य्यदुर्नयश्चाहमपसृत्य दिङ्मुखेषु

भ्रमन्, यदृच्छयास्यां वाराणस्यां प्रमदवने मदनदमनाराधनाय निर्गत्य, सह सखीभिः कन्दुकेनानुक्रीडमानां काशीभर्त्तुश्चण्डसिंहस्य कन्यां कान्तिमतीं नामाचोकमे।

[ 'अथ रहसि गान्धर्वेण विधिना मयासौ परिणीता ] कश्चित् सुतं प्रसूतवती। मृतजात इति सोऽपविद्धो रहस्यनिर्भेदभयात् परिजनेन क्रीडाशैले, शवर्य्या च श्मशानाभ्यासं नीतः। तयैव निवर्त्तमानया निशीथे राजवीथ्याम् आरक्षिकपुरुषैरभिगृह्य तर्जितया, दण्डपारुष्यभीतया निर्भिन्नप्रायं रहस्यम्। राजाज्ञया निशीथेऽहमाक्रीडगिरिदरीगृहे विश्रब्धप्रसुप्तस्तयोपदर्शितः, यथोपपन्नरज्जुबद्धः श्मशानमुपनीय मातङ्गेनोद्यतेन कृपाणेन प्राजिहीर्ष्ये। नियतिबलाल्लूनबन्धस्तमसिमाच्छिद्य, अन्त्यजं तमन्यांश्च कांश्चित् प्रहृत्य, अपासरम्।

'अशरणश्च भ्रमन्नटव्याम्, एकदाश्रुमुख्या कयापि दिव्याकारया सपरिचारया कन्ययोपास्थायिषि। सा मामञ्जलिकिसलयोत्तंसितेन मुखविलोलकुन्तलेन मूर्ध्ना प्रणम्य, मया सह वनवटद्रुमस्य कस्यापि महतः प्रच्छायशीतले तले निषण्णा, "कासि वासु कुतोऽस्यागता? कस्य हेतोरस्य मे प्रसीदसि?" इति साभिलाषमाभाषिता मया, वाङ्मयं मधुवर्षमवर्षत्—

"आर्य्य, नाथस्य यक्षाणां मणिभद्रस्यास्मि दुहिता तारावली नाम। साहं कदाचिदगस्त्यपत्नीं लोपामुद्रां

नमस्कृत्यापावर्त्तमाना मलयगिरेः परेतावासे वाराणस्याः, कमपि दारकं रुदन्तमद्राक्षम्। आदाय चैनं तीव्रस्नेहान्मम पित्रोः सन्निधिमनैषम्, अनैषीच्च मे पिता देवस्यालकेश्वरस्याख्यानीम्। अथाहमाहूयाग्रमा हरसखेन, 'बाले, बालेऽस्मिन् कीदृशस्ते भावः?' इति। 'औरस इवास्मिन् वत्से वत्सलता' इति मया विज्ञापितः, 'सत्यमाह वराकी' इति तन्मूलामतिमहतीं कथामकरोत्।

"तत्रैतावन्मयावगतम्—त्वं किल शौनकः शूद्रकः कामपालश्चाभिन्नः; बन्धुमती विनयवती कान्तिमती चाभिन्ना; वेदिमत्यार्य्यदासी सोमदेवी चैकैव; हंसावली शूरसेना सुलोचना चानन्या; नन्दिनी रङ्गपताकेन्द्रसेना चापृथग्भूता। या किल शौनकावस्थायामग्निसाक्षिकमात्मसात्कृता गोपकन्या, सैव किलार्य्यदासी, पुनरद्य तारावलीत्यभूवम्।

"बालश्च किल शूद्रकावस्थे त्वय्यार्य्यदास्यवस्थायां मय्युदभूत्, अवर्द्धत च विनयवत्या स्नेहवासनया; स तु तस्यां कान्तिमत्यवस्थायामय्योदभूत्। एवमनेकमृत्युमुखपरिभ्रष्टं देवान्मयोपलब्धं तमेक पिङ्गादेशाद् वने तपस्यतो राजहंसस्य देव्यै वसुमत्यै तत्सुतस्य भाविचक्रवर्त्तिनो राजवाहनस्य परिचर्य्यार्थं समर्प्य, गुरुभिरभ्यनुज्ञाता कृतान्तयोगात् कृतान्तमुखभ्रष्टस्य ते पादपद्मशुश्रूषार्थमागतास्मि" इति।

'तत् श्रुत्वा तामनेकजन्मरमणीमसकृदाश्लिष्य, हर्षाश्रु-मुखो मुहुर्मुहुः सान्त्वयित्वा, तत्प्रभावदर्शिते महति मन्दिरेऽहर्निशं भूमिदुर्लभान् भोगानन्वभूवम्। कतिपयानि दिनान्यतिक्रम्य मत्तकाशिनीं तामवादिषम्, "प्रिये, प्रत्यपकृत्य मत्प्राणद्रोहिणश्चण्डसिंहस्य वैरनिर्य्यातन-सुखमनुबुभूषामि" इति। तया सस्मितमभिहितम्, "एहि कान्त, कान्तिमतीदर्शनाय नयामि त्वाम्" इति।

'स्थितेऽर्द्धरात्रे राज्ञो वासगृहमनीये। ततस्तच्छिरो-भागवर्त्तिनीमादायासियष्टिं प्रबोध्यैनं प्रस्फुरन्तम् अब्रवम्, "अहमस्मि भवज्जामाता; भवदनुमत्या विना भवत्कन्यां रहसि परिणीतवान्; तमपराधमनुवृत्त्या प्रमार्ष्टुमागतः" इति। सोऽतिभीतो मामभिप्रणम्य, "अहमेव मूढोऽपराद्धः, यस्तव दुहितृपरिणयानुग्राहिणो ग्रहग्रस्त इवोत्क्रान्तसीमा समादिष्टवान् वधम्; तदास्तां कान्तिमती, राज्यमिदम्, मम च जीवितमद्य प्रभृति भवदधीनम्" इत्यवादीत्।

'अथापरेद्युः प्रकृतिमण्डलं सन्निपात्य विधिवदात्मजायाः पाणिमग्राहयत्। अश्रावयच्च तनयवार्त्तां तारावली कान्तिमत्यै, सोमदेवीसुलोचनेन्द्रसेनाभ्यश्च पूर्वजाति-वृत्तान्तम्। इत्थमहं मन्त्रिपदापदेशं यौवराज्यमनुभवन् सुखं विहरामि' इति।

"स एवं मातृश्रेऽपि जन्तौ परिचर्य्यानुबन्धी, बन्धुरेकः सर्व्वभूतानाम्, अलसकेन स्वर्गते श्वशुरे, ज्यायसि च

श्याले चण्डघोषनाम्नि प्रागेव क्षयक्षीणायुषि, पञ्चवर्षदेशीयं सिंहघोषनामानं कुमारमभ्यषिचयत्; अवर्द्धयच्च विधिनैनं स साधुः।

"तस्याद्य यौवनोन्मादिनः पैशुन्यवादिनो दुर्मन्त्रिणः कतिचिदासन्नन्तरङ्गभूताः। तैः किलासावित्थमग्राह्यत, 'प्रसह्यैव स्वसा तवासुना दुरात्मना परिणीता। पुनः प्रसुप्ते राजनि प्रहर्त्तुमुद्यतासिरासीत्। तेनास्मै तत्क्षणप्रबुद्धेन भीत्यानुनीय दत्ता कन्या। तं च देवज्येष्ठं चण्डघोषं विषेण हत्वा "बालोऽयमसमर्थः" इति त्वमद्यापि प्रकृतिविश्रम्भणायोपेक्षितः। क्षिणोति च पुरा कृतघ्नो भवन्तम्, तमेवान्तकपुरमभिगमयितुं यतस्व' इति।

"स तथा दूषितोऽपि यक्षीभयान्नास्मिन् पापमाचरितुमशकत्। एषु किल दिवसेष्वायथापूर्व्यमाकृतौ कान्तिमत्याः समुपलक्ष्य, राजमहिषी सुलक्षणा नाम सप्रणयमपृच्छत् 'देवि, नाहमयाथातथ्येन[1] विप्रलम्भनीया; कथय तथ्यम्, केनेदमायथापूर्व्यमाननारविन्दे तवेषु वासरेषु?' इति।

"सा त्ववादीत्, 'भद्रे, स्मरसि किमद्याप्यायथातथ्येन किञ्चिन्मयोक्तपूर्वम्? सखी मे तारावली सपत्नी च

---

[1] "यथातथायथापुरयोः पर्यायेण" इति सूत्रेण पूर्वोत्तरपदयोः पर्यायेणादिस्वरस्य वृद्धिः। मूले आयथापूर्व्यम् इत्यत्र आयथापूर्वम् इति पाठो ग्रन्थकर्त्ता सम्मत इति प्रतिभाति।

किमपि कलुषिताशया रहसि भर्त्रा मन्त्रीत्वापदिष्टा प्रणयमप्युपेत्य प्रणम्यमानाप्यस्माभिरुपोढमत्सरा प्रावसत्। अवसीदति च नः[1] पतिः, अतो मे दौर्म्मनस्यम्' इति।

"तत् प्रायेणैकान्ते सुलक्षणया कान्ताय कथितम्। अथासौ निर्भयोऽद्य प्रियतमाविरहपाण्डुभिरवयवैर्धैर्य्यस्तम्भिताश्रुपर्य्याकुलेन चक्षुषोष्मश्वासशोषिताभिरिवानतिपेशलाभिर्वाग्भिर्वियोगं दर्शयन्तम्, कथमपि राजकुले कार्य्याणि कारयन्तम्, पूर्वसङ्केतितैः पुरुषैरभिग्राह्य, अबन्धयत्। 'तस्य किल स्थाने स्थाने दोषानुद्घोष्य, तथोद्धरणीये चक्षुषी यथा तन्मूलमेवास्य मरणं भवेत्' इति; अतोऽत्रैकान्ते यथेष्टमश्रु मुक्त्वा, तस्य साधोः पुरः प्राणान् मोक्तुकामो बध्नामि परिकरम्" इति।

'मयापि तत् पितृव्यसनमाकर्ण्य पर्य्यश्रुणा सोऽभिहितः, "सौम्य,[2] किं तव गोपायित्वा[3]? यस्तस्य सुतो यच्च कन्यया देवस्य राजवाहनस्य पादशुश्रूषार्थं देव्या वसुमत्या हस्तन्यासः कृतः, सोऽहमस्मि। गच्छामि

---

[1] अत्र च-शब्दस्यास्मदर्थगत-समुच्चयद्योतकत्वाभावात् "न चवाहाहैवयुक्ते" इति सूत्रस्याप्रवृत्तेर्नसादेशो निराबाध एव। तथा चोक्तं कौमुद्याम्—"युक्तग्रहणात् साक्षाद् योगेऽयं निषेधः, परम्परासम्बन्धे त्वादेशः स्यादेव" इति।

[2] सोमो देवता अस्य इति "सोमाट् ट्यण्" इति ट्यण्। "सोमदेवता हि तृप्तिहेतुः। अतः सुकुमारोऽपि तृप्तिहेतुत्वादुपचारात् सौम्य इत्युच्यते।"

[3] गम्यमानसाधनक्रियापेक्षया पूर्व्वकालत्वमत्र बोध्यम्।

सहस्रमपि सुभटानामुदायुधानां हत्वा पितरं मोचयितुम्, अपि तु सङ्कुले यदि कश्चित् पातयेत् तदङ्गे शस्त्रिकाम्, सर्व एव मे यत्नो भस्मनि हुतमिव भवेत्" इति।

'अनवसितवचन एव मयि महानाशीविषः प्राकाररन्ध्रेणोदैरयच्छिरः, तमहं मन्त्रौषधिबलेनाभिगृह्य पूर्णभद्रमब्रवम्—"भद्र, सिद्धं नः समीहितम्; अनेन तातमलक्ष्यमाणः सङ्कुले यदृच्छया पतितेन नाम दंशयित्वा, तथा विषं स्तम्भयेयं यथा मृत इत्युदास्येत। त्वया तु मुक्तसाध्वसेन माता मे बोधयितव्या, 'यो यस्या वने देव्या वसुमत्या हस्तार्पितो युष्मत्सूनुः सोऽनुप्राप्तः, पितुरवस्थां मदुपलभ्य बुद्धिबलादित्थमाचरिष्यति। त्वया तु मुक्तत्रासया राज्ञे प्रेषणीयम्,[1] "एष खलु क्षत्रधर्मो यद् बन्धुरबन्धुर्वा [यो] दुष्टः स निरपेक्षं निग्राह्य इति; स्त्रीधर्मश्चैष यददुष्टस्य दुष्टस्य वा भर्त्तुर्गतिर्गन्तव्येति, तदहममुनैव सह चिताग्निमारोक्ष्यामि; अभिजनानुरूपः पश्चिमो विधिरनुज्ञातव्यः" इति। स एवं निवेदितो नियतमनुज्ञास्यति। ततः स्वमेवागारमानीय काण्डपटीपरिक्षिप्ते विविक्तोद्देशे दर्भसंस्तरणमधिशाय्य, स्वयं कृतानुमरणमण्डनया त्वया तत्र

---

[1] सन्देष्टव्यम् इत्यर्थः।

सन्निधेयम्। अहं च बाह्यकक्षागतस्त्वया प्रवेशयिष्ये, ततः पितरमुज्जीव्य तदभिरुचितेनाभ्युपायेन चेष्टिष्यामहे'" इति।

'स "तथा" इति हृष्टतरस्तर्णमगमत्। अहं तु घोषणास्थाने चिञ्चावृक्षं घनतरविपुलशाखमारुह्य गूढतनुरतिष्ठम्; आरूढश्च लोको यथायथमुच्चैः स्थानानि; उच्चावचप्रलापाः प्रसृताः। तावन्मे पितरं तस्करमिव पश्चाद्बद्धभुजम् उडुरध्वनिमहाजनानुयातम् आनीय, मदभ्यास एव स्थापयित्वा मातङ्गस्त्रिरघोषयत्, "एष मन्त्री कामपालो राज्यलोभाद् भर्त्तारं चण्डसिंहं युवराजं चण्डघोषं च विषान्नेनोपांशु हत्वा, पुनर्देवोऽपि सिंहघोषः पूर्णयौवन इत्यमुष्मिन् पापमाचरिष्यन्, विश्वासाद् रहस्यभूमौ पुनरमात्यं शिवनागमाहूय स्थूणमङ्गारवर्षं च राजवधायोपजप्य, तैः स्वामिभक्त्या विवृतगुह्यः, 'राज्यकामुकस्यास्य ब्राह्मणस्यान्धतमसप्रवेशो न्याय्यः' इति प्राड्विवाकवाक्याद् अक्ष्युद्धरणाय नीयते। पुनरन्योऽपि यदि स्यादन्याय्यवृत्तिः, तमप्येवमेव यथार्हेण दण्डेन योजयिष्यति देवः" इति।

'श्रुत्वैतद् बद्धकलकले महाजने, पितुरङ्गे प्रदीप्तशिरसमाशीविषं व्यक्षिपम्। अहं च भीतो नामावप्लुत्य, तत्रैव जनानुलीनः, क्रुद्धव्यालदष्टस्य तातस्य विहितजीवरक्षो विषं क्षणादस्तम्भयम्, अपतच्च स भूमौ

मृतकल्पः; प्रालपं[1] च, "सत्यमिदं राजावमानिनं दैवो दण्ड एव स्पृशतीति, यदयमक्षिभ्यां विनावनिपेन चिकीर्षितः प्राणैरेव वियोजितो विधिना" इति। मदुक्तं च केचिदन्वमन्यन्त, अपरे पुनर्निनिन्दुः। दर्वीकरस्तु तमपि चण्डालं दष्ट्वा रूढत्रासद्रुतलोकदत्तमार्गः प्राद्रवत्।

'अथ मदम्बा पूर्णभद्रबोधितार्था, तादृशेऽपि व्यसने नातिविह्वला, कुलपरिजनानुयाता पद्मामिव धीरमागत्य, मत्पितुरुत्तमाङ्गमुत्सङ्गेन धारयन्ती स्थिता, राज्ञे समादिशत्, "एष मे पतिस्त्वपकर्त्ता न वेति दैवमेव जानाति, न मेऽनयास्ति चिन्तया फलम्। अस्य तु पाणिग्राहकस्य गतिमननुप्रपद्यमाना भवत्कुलं कलङ्कयेयम्, अतोऽनुमन्तुमर्हसि भर्त्रा सह चिताधिरोहणाय माम्" इति।

'श्रुत्वा चैतत् प्रीतियुक्तः समादिशत् क्षितीश्वरः, "क्रियतां कुलोचितः संस्कारः, उत्सवोत्तरं च पश्चिमं विधिसंस्कारमनुभवतु मे भगिनीपतिः" इति। चण्डाले तु मत्प्रतिषिद्धसकलमन्त्रवादिप्रयासे संस्थिते "कामपालोऽपि कालदष्ट एव" इति स्वभवनोपनयनममुष्य स्वमाहात्म्यप्रकाशनाय महीपतिरन्वमंस्त; आनीतश्च पिता मे विविक्तायां भूमौ दर्भसंस्तरमधिशयानः स्थितोऽभूत्।

---

[1] प्रलपतेः प्रयोगेन वचसां मृषात्वं सूच्यते; तेनानुत्थानोपहतावाचकत्वशङ्का।

'अथ मदम्बा मरणमण्डनमनुष्ठाय, सकरुणं सखीरामन्त्र्य, मुहुरभिप्रणम्य भवनदेवताः,यत्ननिवारितपरिजनाक्रन्दिता, पितुर्मे शयनस्थानमेकाकिनी प्राविशत्। तत्र च पूर्वमेव पूर्णभद्रोपस्थापितेन मया वैनतेयतां गतेन निर्विषीकृतं भर्त्तारमैक्षत। हृष्टतमा च पत्युः पादयोः पर्य्यश्रुमुखी प्रणिपत्य, मां च प्रस्नुतस्तनी मुहुर्मुहुः परिष्वज्य, सहर्षबाष्पगद्गदमगदत्, "पुत्र, योऽसि जातमात्रः पापया मया परित्यक्तः, स किमर्थमेवं मामतिनिर्घृणामनुगृह्णासि? अथवैष निरपराध एव ते जनयिता, युक्तमस्य प्रत्यानयनमन्तकाननात्। क्रूरा खलु तारावली, या त्वामुपलभ्यापि तत्त्वतः कुबेरात्, असमर्थ्य मह्यम्, अर्पितवती देव्यै वसुमत्यै; सैव वा सदृशकारिणी, न हि तादृशाद् भाग्यराशेर्विना मादृशो जनोऽल्पपुण्यस्तवार्हति कलप्रलापामृतानि कर्णाभ्यां पातुम्। एहि मां परिष्वजस्व" इति भूयोभूयः शिरसि जिघ्रन्त्यङ्कमारोपयन्ती तारावलीं गर्हयन्त्यश्रुभिरभिषिञ्चन्ती चोत्कम्पिताङ्गयष्टिरन्यादृशीव क्षणमजनिष्ट।

'जनयितापि मे नरकादिव स्वर्गम्, तादृशाद् व्यसनात् तथाभूतमभ्युदयमारूढः, पूर्णभद्रेण विस्तरेण यथावृत्तान्तमावेदितो भगवतो मघवतोऽपि भाग्यवन्तमात्मानमजीगणत्।

'मनागिव च मत्सम्बन्धमाख्याय हर्षविस्मितात्मनोः

पितोरकथयम्, "आज्ञापयतं कात्र नः प्रतिपत्तिः ?" इति ।

'पिता मे प्राब्रवीत्, "वत्स, गृहमिवेदमस्मदीयम् अतिविशालप्राकारवलयम् अक्षय्यायुधस्थानम्, अलङ्घ्यतमा च भूमिः, उपकृताश्च मयातिबहवः सन्ति सामन्ताः, प्रकृतयश्च भूयस्यो न मे व्यसनमनुरुध्यन्ते, सुभटानां चानेकसहस्रमस्त्येव ससुहृत्पुत्रदारम् । अतोऽत्रैव कतिपयान्यहानि स्थित्वा, बाह्याभ्यन्तरङ्गान् कोपानुत्पादयिष्यामः । कुपितांश्च संगृह्य, प्रोत्साह्य चास्य प्रकृत्यमित्रान्, उत्थाप्य सहजांश्च द्विषः, दुर्दान्तमेनमुच्छेत्स्यामः" इति । "को दोषः ? तथास्तु" इति तातस्य मतमन्वमंसि ।

'तथास्मासु प्रतिविधाय तिष्ठत्सु, राजापि विज्ञापितोदन्तो जातानुतापः, पारग्रामिकान् प्रयोगान्[1] प्रायः प्रायुङ्क्त ; ते चास्माभिः प्रत्यहमहन्यन्त[2] । अस्मिन्नेवावकाशे पूर्णभद्रमुखाद् राज्ञः शय्यास्थानमवगम्य, तदेव स्वोदवसितभित्तिकोणादारभ्योरगास्येन सुरङ्गामकाषम् ।

'गता च सा भूमिस्वर्गकल्पमनल्पकन्यकाजनं कमप्युद्देशम् । अव्यथिष्ट च दृष्ट्वैव स मां नारीजनः । तत्र काचिदिन्दुकलेव स्वलावण्येन रसातलान्धकारं निह्नुवाना, विग्रहिणीव देवी विश्वम्भरा, हरगृहिणीवा-

---

[1] कौटिलीयार्थशास्त्रस्य त्रयोदशाधिकरणे प्रतिपादितान् उपायान् ।

[2] अहन्यन्त—वैफल्यमापद्यन्तेत्यर्थः ।

सुरविजयायावतीर्णा, पातालमागता गृहिणीव भगवतः कुसुमधन्वनः, राजलक्ष्मीरिवानेकदुर्नयदर्शनपरिहाराय महीविवरं प्रविष्टा, निष्टप्तकनकपुत्रिकेवावदातकान्तिः कन्यका, चन्दनलतेव मलयमारुतेन मद्दर्शनेनोदकम्पत।

'तथाभूते च तस्मिन्नङ्गनासमाजे, कुसुमितेव काशयष्टिः, पाण्डुशिरसिजा स्थविरा काचित्, चरणयोर्मे निपत्य, त्रासदीनमब्रूत, "दीयतामभयमस्मा अनन्यशरणाय स्त्रीजनाय। किमसि देवकुमारो दनुजयुद्धतृष्णया रसातलं विविक्षुः? आज्ञापय—कोऽसि? कस्य हेतोरागतोऽसि?" इति।

'सा तु मया प्रत्यवादि, "सुदत्यः,[1] मा स्म भवत्यो भैषुः। अहमस्मि द्विजातिवृषभात् कामपालाद् देव्यां कान्तिमत्यामुत्पन्नोऽर्थपालो नाम। सत्यर्थं निजगृहान्नृपगृहं सुरङ्गयोपसरन्निहान्तरे वो दृष्टवान्। कथयत—काः स्थ यूयम्? कथमिह निवसथ?" इति।

'सोदञ्जलिरुदीरितवती, "भर्तृदारक, भाग्यवत्यो वयम्, यास्त्वामेभिरेव चक्षुर्भिरनघम् अद्राक्ष्म। श्रूयताम्—यस्तव मातामहश्चण्डसिंहः, तेनास्यां देव्यां लीलावत्यां चण्डघोषः कान्तिमती चेत्यपत्यद्वयमुदपादि।

---

[1] 'सुदत्यः' इति सर्वा अभिप्रेत्य तामभिलक्ष्य सम्बोधनम्। अत्र शोभनदन्तोपलक्षितस्य यौवनस्य प्रतीतेः "वयसि दन्तस्य दतृ" इति सूत्रस्य प्रवृत्तिर्निराबाधा।

चण्डघोषस्तु युवराजो राजयक्ष्मणा सुरक्षयमगात्, अन्तर्वत्नीं देव्यामाचारवत्याम्; अमुया चेयं मणिकर्णिका नाम कन्या प्रसूता। अथ प्रसववेदनया मुक्तजीविताचारवती पत्युरन्तिकमगात्।

"अथ देवश्चण्डसिंहो मामाहूयोपह्वरे समाज्ञापयत्, 'ऋद्धिमति, कन्यकेयं कल्याणलक्षणा; तामिमां मालवेन्द्रनन्दनाय दर्पसाराय विधिवद् वर्द्धयित्वा दित्सामि। बिभेमि च कन्यकानां प्रकाशावस्थापनात्। अत इयमरातिव्यसनाय कारिते महति भूमिगृहे कृत्रिम-शैलगर्भोत्कीर्णनानामण्डपप्रेक्षागृहे प्रचुरपरिवर्हया भवत्या संवर्द्ध्यताम्। अस्त्यत्र भोग्यवस्तु वर्षशतोपभोगेनाप्य-क्षय्यम्' इति।

"स तथोक्त्वा, निजवासगृहस्य द्व्यङ्गुलभित्तावर्द्धपादं किष्कुविष्कम्भमुद्धृत्य तेनैव द्वारेण स्थानमिदमस्मान् अवीविशत्। इह च नो वसन्तीनां द्वादश समाः समत्ययुः, इयं च वत्सा तरुणीभूता, न चाद्यापि स्मरति राजा। काममियं पितामहेन दर्पसाराय सङ्कल्पिता, त्वदम्बया तु कान्तिमत्या गर्भस्थैव द्यूतजिता स्वमात्रा तवैव जायात्वेन समकल्प्यत। तदत्र प्राप्तरूपं चिन्त्यतां कुमारेणैव" इति। तां पुनरवोचम्, "अद्यैव राजगृहे किमपि कार्य्यं साधयित्वा प्रतिनिवृत्तो युष्मासु यथार्हं प्रतिपत्स्ये" इति।

'तेनैव दीपदर्शितबिलपथेन गत्वा, स्थितेऽर्द्धरात्रे, तदर्द्धपादं प्रत्युद्धृत्य, वासगृहं प्रविष्टो विस्रब्धसुप्तं सिंहघोषं जीवग्राहमग्रहीषम्। आकृष्य च तमहिमिवाहितुण्डः स्फुरन्तमसुनैव भित्तिरन्ध्रपथेन स्त्रैणसन्निधिमनैषम्; आनीय च स्वभवनम्, आयसनिगडसन्दानितचरणयुगलम्, अवनमितमलिनवदनम्, अश्रुबहुलरक्तचक्षुषम्, एकान्ते जनयित्रोर्ममादर्शयम्; अकथयं च बिलकथाम्।

'अथ पितरौ प्रहृष्टतरौ, तं निकृष्टाशयं निशाम्य, बन्धने नियम्य, तस्या दारिकाया यथार्हेण कर्म्मणा मां पाणिमग्राहयताम्[1]। अनायकं च तद्राज्यमस्मदायत्तमेव जातम्; प्रकृतिकोपभयात्तु मम मात्रा सुमुच्चितोऽपि न मुक्त एव सिंहघोषः। तथास्थिताश्च वयम् "अङ्गराजः सिंहवर्म्मा देवपादानां भक्तिमान् कृतकर्म्मा च" इत्यमित्राभियुक्तमेनमभ्यसराम। अभूवं च भवत्पादपङ्कजरजोऽनुग्राह्यः। स चेदानीं भवच्चरणप्रणामप्रायश्चित्तमनुतिष्ठतु सर्वदुश्चरितक्षालनमनार्य्यः सिंहघोषः' इत्यर्थपालः प्राञ्जलिः प्रणनाम।

---

[1] उपरिष्टात् (१६२ पृष्ठे) "विदितार्थस्तु पार्थिवस्त्वया दुहितुः पाणिं ग्राहयिष्यति" इत्यत्र प्रयोज्यकर्मणि तृतीयादर्शनाद् ग्राहयतेः पाक्षिकं द्विकर्मकत्वमाचार्य्यवर्य्याणामभिमतमिति प्रतिभाति। पाणिनीयैस्तु प्रायेण द्विकर्मकत्वं प्रत्याचचाक्षे: कुम्भकाराश्यवलम्बनन्यायेन धातोर्वृद्धर्थकत्वं वा परिकल्प्यते, ग्राह्यादिकं वाध्याक्रियते।

देवोऽपि राजवाहनः 'बहु पराक्रान्तम्, बहुप्रयुक्ता च बुद्धिः, मुक्तबन्धनस्ते श्वशुरः पश्यतु माम्' इत्यभिधाय, भूयः प्रमतिमेव पश्यन् प्रीतिस्मेरः 'प्रस्तूयतां तावदात्मीयं चरितम्' इत्याज्ञापयत्।

इति श्रीदण्डिनः कृतौ दशकुमारचरितेऽर्थपालचरितं
नाम चतुर्थ उच्छ्वासः।

---

## प्रमतिचरितम्

[ पञ्चम उच्छ्वासः ]

सोऽपि प्रणम्य विज्ञापयामास, 'देव, देवस्यान्वेषणाय दिक्षु भ्रमन्नभ्रङ्कषस्य कस्यापि विन्ध्यपार्श्वरूढस्य वनस्पतेरधः परिणतपतङ्गबालपल्लवावतंसिते पश्चिमदिगङ्गनामुखे, पल्वलाम्भस्युपस्पृश्योपास्य सन्ध्याम्, तमःसमीकृतेषु निम्नोन्नतेषु, गन्तुमक्षमः क्षमातले किसलयैरुपरचय्य शय्यां शिशयिषमाणः, शिरसि कुर्वन्नञ्जलिम्, "यास्मिन् वनस्पतौ वसति देवता, सैव मे शरणमस्तु शरारुचक्रचार-

भीषणायां शर्वरीशयामशार्वरान्धकारपूराध्मातगभीरगह्वरायां महाटव्यामस्यामेकाकिनः प्रसुप्तस्य" इत्युपधाय वामभुजम्, अशयिषि।

'ततः क्षणादेवावनितलदुर्लभेन स्पर्शेनासुखायिषत[2] किमपि गात्राणि, आह्लादिषत चेन्द्रियाणि, अभ्यमनायिष्ट चान्तरात्मा। पर्यस्फुरन्मे दक्षिणभुजः। "कथं न्विदम्?" इति मन्दं मन्दमुन्मिषन्नुपर्यच्छचन्द्रातपच्छेदकल्पं शुक्लांशुकवितानमैक्षिषि।

'वामतो वलितदृष्टिः, समया सौधभित्तिम्, चित्रास्तरणशायिनम्, विश्रब्धप्रसुप्तम् अङ्गनाजनमलक्षयम्। दक्षिणतो दत्तचक्षुश्च जातनिद्रमामीलितलोचनेन्दीवरमाननं दधानां कामपि तरुणीमालोकयम्।

'अतर्कयं च, "क्व गता सा महाटवी? कुत इदं शक्तिध्वजशिखरशूलोत्सेधं सौधमागतम्? क्व च तदरण्यस्थलीसमास्तीर्णं पल्लवशयनम्? कुतस्त्यं चेदमिन्दुगभस्तिसम्भारभासुरं हंसतूलदुकूलशयनम्? एष

---

[1] अपाणिनीयमेतदिति प्रामाणिकाः। तथा च वामनः—"शार्वरमिति च। शार्वरं तम इत्येव च 'कालाट् ठञ्' इति ठञ् दुर्धरः।" अभियुक्तप्रयोगबाहुल्यदर्शनात् "क्वचिदपवादविषयेऽप्युत्सर्गोऽभिनिविशते" इति न्यायेन कथञ्चित् साधनीयम्। (१०२ पृष्ठे पादटीका द्रष्टव्या।)

[2] "सुखादिभ्यः कर्त्तृवेदनायाम्" इति क्यङि, सुखाय इति नामधातोर्लुङि रूपम्। गात्राणां सुखवेदनमौपचारिकं बोध्यम्।

च को नु शीतरश्मिकिरणरजतरज्जुदोलापरिभ्रष्टो मूर्च्छित इवाप्सरोगणः स्वैरसुप्तः सुन्दरीजनः? का चेयं देवीवारविन्दहस्ता, शारदशशाङ्कमण्डलं पर्य्यङ्कमेतद् अमलदुकूलोत्तरच्छदमधिशेते शयनतलम्? न तावदेषा देवयोषा, यतो मन्दमन्दमिन्दुकिरणैः संवाह्यमाना कमलिनीव सङ्कुचति, तदेषा मानुष्येव। अनया हि विश्रब्धमधुरं सुप्यते, अस्ति चानतिक्रान्तशिष्टमर्य्यादचेतसो ममास्यामासक्तिः; यद् भावि तद् भवतु, भाग्यमत्र परीक्षिष्ये" इति स्पृष्टास्पृष्टमेव लघुसुप्तः स्थितोऽस्मि। सापि मन्दमन्दजृम्भिकारम्भमन्थराङ्गी, लवङ्गदशपक्ष्मणो-श्चक्षुषोरलसतान्ततारकेण युगलेनेषदुन्मिषन्ती, सस्पृहेण मन्दमन्दप्रचारितेन चक्षुषा मदङ्गानि निर्वर्ण्य, दूरोत्सर्पितपूर्व्वकायापि तस्मिन्नेव शयने सचकितमशयिष्ट; अजनिष्ट च मे रागाविष्टचेतसोऽपि कापि निद्रा।

'पुनरननुकूलस्पर्शदुःखायमानगात्रः प्राबुध्ये। प्रबुद्धस्य च सैव मे महाटवी, तदेव तरुतलम्, स एव पल्लवास्तरो-ऽभूत्; विभावरी च व्यभासीत्। अभूच्च मे मनसि, "किमयं स्वप्नो विप्रलम्भो वा? किमियमासुरी दैवी वा कापि माया?" इति। 'यद्भावि तद्भवतु; नाहमिदं तत्त्वतो नावबुध्य मोक्ष्यामि भूमिशय्याम्, यावदायुरत्रास्यै देवतायै प्रतिशयितो[1] भवामि" इति निश्चितमतिरतिष्ठम्।

'अथाविर्भूय कापि रविकराभितप्त-कुवलयदामताम्ताङ्गयष्टिः क्लिष्टनिवसनोत्तरीया, निरलक्तकरूक्षपाटलेन निःश्वासोष्मजर्जरितत्विषा दन्तच्छदेन वमन्तीव कपिलधूम्रधूम्रं विरहानलम् अनवरतसलिलधाराविसर्ज्जनाद् रुधिरावशेषमिव लोहिततरं द्वितयमक्ष्णोरुद्वहन्ती कुलचारित्रबन्धनपाशविभ्रमेणैकवेणीभूतेन केशपाशेन नीलांशुकचीरचूडिकापरिवृता, पतिव्रतापताकेव सञ्चरन्ती, क्षामक्षामापि देवतानुभावादनतिक्षीणवर्णावकाशा सीमन्तिनी, प्रणिपतन्तं मां प्रहर्षोत्कम्पितेन भुजलताद्वयेनोत्थाप्य, पुत्रवत् परिष्वज्य, शिरस्युपाघ्राय, स्नेहगद्गदं व्याहार्षीत्, "वत्स, यदि वः कथितवती मगधराजमहिषी वसुमती, 'मम हस्ते बालमर्थपालं निधाय, कथां च काञ्चिदात्मभर्त्तृपुत्रसखीजनानुबद्धां राजराजप्रवर्त्तितां कृत्वान्तर्धानमगादात्मजा मणिभद्रस्य' इति, साहमस्मि वो जननी।

"पितुर्वो धर्म्मपालसूनोः सुमन्त्रानुजस्य कामपालस्य पादमूलान्निष्कारणकोपकलुषिताशया, प्रोष्यानुशयविधुरा, स्वप्ने केनापि रक्षोरूपिणोपेत्य शप्तास्मि, 'चण्डिकायां त्वयि

[1] प्रतिशयितः—देवताप्रसादपर्यन्तं मनोरथसिद्धिमभिसन्धाय पानभोजनपरिहारपूर्वकं भूमौ शयितः। (धर्णा देशीया इति भाषा।)

वर्षमात्रं वसामि प्रवासदुःखाय' इति ब्रुवतैवाहमाविष्टा प्राबुध्ये ।

"गतं च तद् वर्षं वर्षसहस्रदीर्घम् । अतीतायां तु यामिन्यां देवदेवस्य त्र्यम्बकस्य श्रावस्त्यामुत्सवसमाजमनुभूय, बन्धुजनं च स्थानस्थानेभ्यः[1] समापतितमभिसमीक्ष्य, मुक्तशापा, पत्युः पार्श्वमभिसरामीति प्रस्थितायामिव मयि, त्वमत्राभ्युपेत्य 'प्रतिपन्नोऽस्मि शरणमिहत्यां देवताम्' इति प्रसुप्तोऽसि ।

"एवं शापदुःखाविष्टया तु मया तदा न तत्त्वतः परिच्छिन्नो भवान्, अपि तु शरणागतमविरलप्रमादायाम् अस्यां महाटव्यामयुक्तं परित्यज्य गन्तुमिति, मया त्वमपि स्वंपन्नेवासि नीतः । प्रत्यासन्ने च तस्मिन् देवगृहे पुनः, अचिन्तयम्, 'कथमिव तरुणेनानेन सह समाजं गमिष्यामि ?' इति ।

"अथ राज्ञः श्रावस्तीश्वरस्य यथार्थनाम्नो धर्मवर्द्धनस्य कन्यां नवमालिकाम्, घर्मकालसुभगे कन्यापुरविमानहर्म्यतले विशालकोमलं शय्यातलमधिशयानां यदृच्छयोपलभ्य, 'दिष्ट्येयं सुप्ता, परिजनश्च गाढनिद्रः, शीतामय-

[1] अत्र 'नित्यवीप्सयोः' इति वीप्सायां द्विर्वचनम्, तेन कर्मधारयवदुत्तरेषु' इति सूत्रस्याप्रवृत्तेः समासवद्भावश्चिन्त्यः, एवमन्यत्रापि ।

मत्र मुहूर्त्तमात्रं ब्राह्मणकुमारः, यावत् कृतकृत्या निवर्त्तेय' इति त्वां तत्र शाययित्वा, तमुद्देशमगमम् ।

"दृष्ट्वा चोत्सवश्रियम्, निर्विश्य च स्वजनदर्शनसुखम्, अभिवाद्य च त्रिभुवनेश्वरम्, नमस्कृत्य च भगवतीमम्बिकाम्, तया गिरिदुहित्रा देव्या सस्मितम् 'अयि भद्रे, मा भैषीः ; भवेदानीं भर्त्तृपार्श्वगामिनी, गतस्ते शापः' इत्यनुगृहीता, सद्य एव प्रत्यापन्नमहिमा प्रतिनिवृत्य, दृष्ट्वैव त्वां यथावदभ्यजानाम्, 'मत्सुतस्यैवायं वत्सस्यार्थपालस्य प्राणभूतः सखा प्रमतिरिति । पापया मयास्मिन्नज्ञानादौदासीन्यमाचरितम् ! अपि चायमस्यामासक्तभावः, कन्या चैषा सानुरागैतस्मिन् ; उभौ चेमौ लज्जसुप्तौ त्रपया साध्वसेन वरन्योऽन्यमात्मानं न विज्ञापयाते । गन्तव्यं च मया ; अनुरक्तयाप्यनया कन्यया रहस्यरक्षणाय न समाभाषितः सखीजनः परिजनो वा । नयामि तावत् कुमारम्, पुनरपीममर्थं लब्धलक्षो यथोपपन्नैरुपायैः साधयिष्यति' इति ।

"मत्प्रभावप्रस्वापितं भवन्तमेतदेव पत्रशयनं प्रत्यनैषम् । —एवमिदं वृत्तम् । एषा चाहं पत्युर्मे पादमूलं प्रत्युपसर्पेयम्" इति प्राञ्जलिं मां भूयोभूयः परिष्वज्य शिरस्युपाघ्राय स्नेहविह्वला गतासीत् ।

'अहञ्च श्रावस्तीमभ्यवर्त्तिषि ; मार्गे च महति निगमे नैगमानां ताम्रचूडयुद्धकोलाहलो महानासीत् ।

अहं च तत्र सन्निहितः किञ्चिदस्मेषि, सन्निधिनिषण्णस्तु मे वृद्धः कोऽपि ब्राह्मणः शनकैः स्मितहेतुमपृच्छत्। अब्रवं च, "कथमिव नारिकेलजातिः प्राच्यवाटकुक्कुटस्य प्रतीच्यवाटः पुरुषैरसमीक्ष्य बलाकाजातिस्ताम्रचूडो बलप्रमाणाधिकस्यैवं प्रतिविसृष्टः ?" इति।

'सोऽपि तज्ज्ञः "किमज्ञैरेभिर्व्यत्पादितैः ? तूष्णीमास्स्व" इत्युपहस्तिकायास्ताम्बूलं कर्पूरसहितमुद्धृत्य मह्यं दत्त्वा, चित्राः कथाः कथयन् क्षणमतिष्ठत्। प्रायुध्यत चातिसंरब्धमनुप्रहारप्रवृत्तस्वपक्षमुक्तकण्ठीरवरवं विहङ्गमद्वयम्, जितश्चासौ प्रतीच्यवाटकुक्कुटः। सोऽपि वृद्धः स्ववाटकुक्कुटविजयहृष्टो मयि वयोविरुद्धं सख्यमुपेत्य, तदहरेव स्वगृहे स्नानभोजनादि कारयित्वा, उत्तरेद्युः श्रावस्तीं प्रति यान्तं मामनुगम्य "स्मर्तव्योऽस्मि सत्यर्थे" इति मित्रवद् विसृज्य प्रत्ययासीत्।

'अहं च गत्वा श्रावस्तीम्, अध्वश्रान्तो बाह्योद्याने लतामण्डपे शयितोऽस्मि। हंसरवप्रबोधितश्चोत्थाय, कामपि क्वणन्नूपुरमुखराभ्यां चरणाभ्यां मदन्तिकमुपसरन्तीं युवतीमद्राक्षम्। सा त्वागत्य स्वहस्तवर्त्तिनि चित्रपटे लिखितं मत्सदृशं कमपि पुरुषं मां च पर्यायेण निर्वर्णयन्ती, सविस्मयं सवितर्कं सहर्षं च क्षणमवातिष्ठत।

'मयापि तत्र चित्रपटे मत्सादृश्यं पश्यता तद्दृष्टिचेष्टितमनाकस्मिकं मन्यमानेन "ननु सर्वसाधारणोऽयं

रमणीयः पुष्पारामभूमिभागः, किमिति चिरस्थिति-क्लेशोऽनुभूयते ? ननूपवेष्टव्यम्" इत्यभिहिता सा सस्मितम् "अनुगृहीतास्मि" इति न्यषीदत्।

'सङ्कथा च देशवार्त्तानुविद्धा काचनावयोरभूत्। कथासंश्रिता च सा "देशातिथिरसि, दृश्यन्ते च तेऽध्व-श्रान्तानीव गात्राणि; यदि न दोषः, मद्गृहेऽद्य विश्रमितुमनुग्रहः क्रियताम्" इत्यशंसत्।

'अहं च "अयि मुग्धे, नैष दोषः, गुण एव" इति तदनुमार्गगामी, तद्गृहगतो राजार्हेण स्नानभोजनादिनोप-चरितः, सुखं निषण्णः, रहसि पर्यपृच्छ्ये, "महाभाग, दिगन्तराणि भ्रमता क्वचिदस्ति किञ्चिदद्भुतं भवतोप-लब्धम् ?" इति।

'ममाभवन्मनसि, "महदिदमाशास्पदम्। एषा खलु सखी राजदारिकायाः, चित्रपटे चास्मिन्नपि तदुपरि-विरचितसितवितानं हर्म्यतलम्, तत्रतच्च प्रकामविस्तीर्णं शरदभ्रपटलपाण्डुरं शयनम्, तदधिशायिनी च निद्रालीढ-लोचना ममैवेयं प्रतिकृतिः" इति।

'अथाहमब्रवम्, "भद्रे, देहि चित्रपटम्" इति; सा त्वर्पितवती मद्धस्ते। तमादाय तामपि व्याजसुप्तां राजकुमारीं तत्रैवाभिलिख्य, "काचिदेवम्भूता युवति-रीदृशस्य पुंसः पार्श्वशायिन्यरण्यानीप्रसुप्तेन मयोपलब्धा। किमेष स्वप्नः ?" इत्यालपं च। दृष्ट्या तु तया

विस्तरतः पृष्टः सर्वमेव वृत्तान्तमकथयम्, असौ च सख्या मन्निमित्तान्यवस्थान्तराण्यवर्णयत्। तदाकर्ण्य, "यदि तव सख्या मदनुग्रहोन्मुखं मानसम्, तदा गमय कानिचिदहानि, कमप्युपायमारचय्यागमिष्यामि" इति कथञ्चिदेनामभ्युपगमय्य, गत्वा तदेव खर्वटम्, वृद्धेन समगंसि। स च ससम्भ्रमं विश्रमय्य, तथैव स्नानभोजनादि कारयित्वा, रहस्यपृच्छत्, "आर्य, कस्य हेतोरचिरेणैव प्रत्यागतोऽसि?"

'प्रत्यवादिषमेनम्, "स्थान एवाहमार्येणास्मि पृष्टः। श्रूयताम्—अस्ति हि श्रावस्ती नाम नगरी, तस्याः पतिरपर इव धर्मपुत्रो धर्मवर्द्धनो नाम राजा; तस्य दुहिता, प्रत्यादेश इव श्रियः, सौकुमार्य्यविडम्बितनवमालिका नवमालिका नाम कन्यका। सा मया समापत्तिदृष्टा कटाक्षमालां मम मर्मणि व्यकिरत्, तच्छल्योद्धरणाक्षमस्त्र 'धन्वन्तरिसदृशस्त्वदृते नेतरोऽस्ति वैद्यः' इति प्रत्यागतोऽस्मि। तत् प्रसीद कञ्चिदुपायमारचयितुमर्हसि।

"अयमहं परिवर्त्तितस्त्रीवेषस्ते कन्या नाम भवेयम्। अनुगतश्च मया त्वमुपगम्य धर्मासनगतं धर्मवर्धनं वक्ष्यसि, 'ममेयमेकैव दुहिता; जातमात्रायां त्वस्यां जनन्यस्याः संस्थिता, माता च पिता च भूत्वाहमेव व्यवर्धयम्। एतदर्थमेव विद्यामयं शुल्कमर्जितुं गतोऽभूदवन्तिनगरी-

मुज्जयिनीमस्मद्देवाह्मकुलजः कोऽपि विप्रदारकः; तस्मै चेयमनुमता दातुम्, इतरस्मै न योग्या। तरुणीभूता चेयम्, स च विलम्बते, तेन तमानीय पाणिमस्या ग्राहयित्वा तस्मिन्न्यस्तभारः संन्यसिष्ये। यदि वृद्धं ब्राह्मणमधीतिनमगतिमतिथिं च मामनुग्राह्यपक्षे गणयति देवः, तर्हि सैषा भवद्भुजतरुच्छायामखण्डितचारित्रा तावदध्यास्ताम्, यावदस्याः पाणिग्राहकमानयेयम्' इति।

"स एवमुक्तो नियतं स्वदुहितृसन्निधौ मां वासयिष्यति। गतस्तु भवान् आगामिनि मासि फाल्गुने फल्गुनीषूत्तरासु भाविनि राजान्तःपुरजनस्य तीर्थयात्रोत्सवे, तीर्थस्थानात्प्राच्यां दिशि गोरुतान्तरमतिक्रम्य, वानीरवलयमध्यवर्तिनि कार्तिकेयगृहे, करतलगतेन शुक्लांशुकयुगलेन स्थास्यति। स खल्वहमनभिशङ्क्य एवैतावन्तं कालं सहावस्थाय राजकन्यकया, भूयस्तस्मिन्नुत्सवे गङ्गाम्भसि संप्लवमानः क्रीडापरवशे नागरिकसमाजे, मग्नोपस्तत-स्त्वदभ्यास एवोन्मङ्क्ष्यामि; पुनस्त्वदुपाहृते वाससी परिधाय, अपनीतदारिकावेषः, जामाता नाम भूत्वा त्वामेवानुगच्छेयम्।

"नृपात्मजा तु मामितस्ततोऽन्विष्यानासादयन्ती 'तया विना न भोक्ष्ये' इति रुदत्येवावरोधने स्थास्यति। तन्मूले च महति कोलाहले, क्रन्दत्सु परिजनेषु रुदत्स्ववरोधजनेषु, शोचत्सु पौरजानपदेषु, किंकर्तव्यतामूढे

सामात्ये पार्थिवे, त्वमास्थानीमेत्य, मां स्थापयित्वा, वक्ष्यसि, 'देव, स एष मे जामाता तवार्हति श्रीभुजाराधनम्। अधीती चतुर्ष्वाम्नायेषु, गृहीती षट्स्वङ्गेषु, आन्वीक्षिकी-विचक्षणः, चतुःषष्टिकलागमप्रयोगचतुरः, विशेषेण गज-रथतुरगतन्त्रवित्, इष्वसनास्त्रकर्मणि गदायुद्धे च निरुपमः, पुराणेतिहासकुशलः, कर्त्ता काव्यनाटकाख्यायिकानाम्, वेत्ता सोपनिषदोऽर्थशास्त्रस्य, निर्मत्सरो गुणेषु, विश्रम्भी सुहृत्सु, शक्यः, संविभागशीलः श्रुतधरो गतस्मयश्च। नास्य दोषमणीयांसमप्युपलभे, न च गुणेष्वविद्यमानम्; तस्माद्दृशस्य ब्राह्मणमात्रस्य न लभ्य एष सम्बन्धः। दुहितरमस्मै समर्प्य, वार्धकोचितमन्त्यमाश्रमं संक्रमेयम्, यदि देवः साधु मन्यते' इति।

"स इदमाकर्ण्य वैवर्ण्याक्रान्तवक्त्रः, परमुपेतो वैलक्ष्यम्, आरप्स्यतेऽनुनेतुमनित्यतादिसङ्कीर्तनेनात्रभवन्तं मन्त्रिभिः सह। त्वं तु तेषामदत्तश्रोत्रो मुक्तकण्ठं रुदित्वा, वाष्पकुण्ठकण्ठः काष्ठान्याहृत्याग्निं सन्धुक्ष्य राजमन्दिरद्वारे चिताधिरोहणायोपक्रंस्यसे। स तावदेव त्वत्पादयोर्निपत्य सामात्यो नरपतिरनूनैरर्थैस्त्वामुपच्छन्द्य, दुहितरं मह्यं दत्त्वा, मद्योग्यतासमाराधितः समस्तमेव राज्यभारं मयि समर्पयिष्यति। सोऽयमभ्युपायोऽनुष्ठेयः यदि तुभ्यं रोचते" इति।

'सोऽपि पटुरसकृदभ्यस्तकपटप्रपञ्चः पाञ्चालशर्मा

यथोक्तमभ्यधिकं च निपुणमुपक्रान्तवान्। आसीच्च मम समीहितानामहीनकालसिद्धिः।

'अस्य राज्ञः सिंहवर्मणः साहाय्यदानं सुहृत्संकेतभूमिगमनमित्युभयमपेक्ष्य, सर्वबलसन्दोहेन चम्पामिमामुपगतः देवाद्देवदर्शनसुखमनुभवामि' इति।

श्रुत्वैतत् प्रमतिचरितं स्मितमुकुलितमुखनलिनः, 'विलासप्रायमूर्जितम्, मृदुप्रायं चेष्टितम्, इष्ट एष मार्गः प्रज्ञावताम्। अथेदानीमत्रभवान् प्रविशतु' इति मित्रगुप्तमैक्षत क्षितीशपुत्रः।

इति श्रीदण्डिनः कृतौ दशकुमारचरिते प्रमतिचरितं नाम पञ्चम उच्छ्वासः।

---

# मित्रगुप्तचरितम्

## [ षष्ठ उच्छ्वासः ]

सोऽप्याचचक्षे, 'देव, सोऽहमपि सुहृत्साधारणभ्रमणकारणः सुह्मेषु दामलिप्ताह्वयस्य नगरस्य बाह्योद्याने महान्तमुत्सवसमाजमालोकयम्। तत्र क्वचिदतिमुक्तकलतामण्डपे कमपि वीणावादनेनात्मानं विनोदयन्तमुत्कण्ठितं युवानमद्राक्षम्। अप्राक्षं च, "भद्र, को

नामायमुत्सवः ? किमर्थं वा समारब्धः ? केन वा निमित्तेन पुनरुत्सवश्रियमनादृत्यैकान्ते भवान् परिवादिनीद्वितीयस्तिष्ठति ?" इति।

'सोऽभ्यधत्त, "सौम्य, सुह्मपतिस्तुङ्गधन्वा नामानपत्यः प्रार्थितवानस्मिन्नायतने विस्मृतविन्ध्यवासरागं वसन्त्या विन्ध्यवासिन्याः पादमूलादपत्यद्वयम्। अनया च किलास्मै प्रतिशयिताय स्वप्ने समादिष्टम्, 'समुत्पत्स्यते तवैकः पुत्रः, जनिष्यते चैका दुहिता। स तु तस्याः पाणिग्राहकमनुजीविष्यति। सा तु सप्तमाद् वर्षादारभ्य, आ परिणयात् प्रतिमासं कृत्तिकासु कन्दुकनृत्येन गुणवद्भर्तृलाभाय मां समाराधयतु। यं च साभिलषेदमुष्मै देया। स चोत्सवः कन्दुकोत्सवनामास्तु' इति।

"ततोऽल्पीयसा कालेन राज्ञः प्रियमहिषी, मेदिनी नाम, एकं पुत्रमसूत, समुत्पन्ना चैका दुहिता। साद्य कन्या कन्दुकावती नाम सोमापीडां देवीं कन्दुकविहारेणाराधयितुमागमिष्यति।

"तस्यास्तु सखी धात्रेयिका चन्द्रसेना नाम मम प्रियासीत्, सा चैषु दिवसेषु राजपुत्रेण भीमधन्वना बलवदनुरुद्धा; तदहमुत्कण्ठितो दुःखोद्विग्नचेताः, कलेन वीणारवेणात्मानं किञ्चिदाश्वासयन्, विविक्तमध्यासे" इति।

'अस्मिन्नेव च क्षणे किमपि नूपुरक्वणितमुपातिष्ठत, आगता च काचिदङ्गना। दृष्ट्वैव स एनामुत्फुल्ल-

दृष्टिरभ्रंसत्, "सैषा मे प्राणसमा, यद्विरहो दहन इव दहति माम्। इदञ्च मे जीवितमपहरता राजपुत्रेण मृत्युनेव निरुष्मतां नीतः। न च शक्ष्यामि राजसूनुरित्यमुष्मिन् पापमाचरितुम्। अतोऽनयात्मानं सुदृष्टं कारयित्वा, त्यक्ष्यामि निष्प्रतिक्रियान् प्राणान्" इति।

'सा तु पर्य्यश्रुमुखी समभ्यधात्, "मा स्म नाथ मत्कृतेऽध्यवस्यः साहसम्। तदथैव नय मामीप्सितं देशम्" इति।

'स तु मामभ्यधत्त, "भद्र, भवद्दृष्टेषु राष्ट्रेषु कतमत् समृद्धं सम्पन्नशस्यं सत्पुरुषभूयिष्ठं च?" इति। तमहमीषद्विहस्याब्रवम्, "भद्र, विस्तीर्णेयमर्णवाम्बरा, न पर्य्यन्तोऽस्ति स्थानस्थानेषु रम्याणां जनपदानाम्; अपि तु न चेदिह युवयोः सुखनिवासकारणं कमप्युपायमुत्पादयितुं शक्नुयाम्, ततोऽहमेव भवेयमध्वदर्शी" इति।

'तावतोदैरत रणितानि मणिनूपुराणाम्। अथासौ जातसम्भ्रमा "प्राप्तैवेयं भर्त्तृदारिका कन्दुकावती कन्दुकक्रीडितेन देवीं विन्ध्यवासिनीमाराधयितुम्। अनिषिद्धदर्शना चेयमस्मिन् कन्दुकोत्सवे; सफलमस्तु युष्मच्चक्षुः, आगच्छतं द्रष्टुम्, अहमस्याः सकाशवर्त्तिनी भवेयम्" इत्ययासीत्।

'तामन्वयाव चावाम्। महति रत्नरङ्गपीठे स्थितां प्रथमं तामत्रोष्ठीमपश्यम्, अतिष्ठच्च सा सद्य एव मम हृदये।

चित्रीयाविष्टचित्ते "किमियं लक्ष्मीः? न हि, न हि, तस्याः किल हस्ते विन्यस्तं कमलम्, अस्यास्तु हस्त एव कमलम्" इति चिन्तयत्येव च मयि, सा व्यत्यस्तहस्तपल्लवाग्रस्पृष्टभूमिरालोलनीलकुटिलालका, सविभ्रमं भगवतीमभिवन्द्य कन्दुकमालम्बत।

'लीलाशिथिलं च भूमौ मुक्तवती। मन्दोत्थितं च किञ्चित्कुञ्चिताङ्गुष्ठेन प्रसृतकोमलाङ्गुलिना पाणिपल्लवेन समाहत्य, हस्तपृष्ठेन चोन्नीय, चटुलदृष्टिलाञ्छितं स्तवकमिव भ्रमरमालानुविद्धमवपतन्तमाकाश एवाग्रहीत्, अमुञ्चच; मध्यविलम्बितलये द्रुतलये मृदुमृदु च प्रहरन्ती, तत्क्षणं चूर्णपदमदर्शयत्।

'प्रशान्तं च तं निर्दयप्रहारैरुदपातयत्। विपर्ययेण च प्राशमयत्, ऋज्वागतं च वामदक्षिणाभ्यां कराभ्यां पर्यायेणाभिघ्नती शकुन्तमिवोदस्थापयत्; दूरोत्थितं च प्रपतन्तमाहत्य गीतमार्गमारचयत्, प्रतिदिशं च गमयित्वा प्रत्यागमयत्।

'एवमनेककरणमधुरं विहरन्ती, रङ्गगतस्य रक्तचेतसो जनस्य प्रतिक्षणमुच्चावचाः प्रशंसावाचः प्रतिगृह्णती, मण्डलभ्रमणेषु कन्दुकस्यातिशीघ्रप्रचारितया विशन्तीव मद्दर्शनलज्जया पुष्पमयं पञ्जरम्, अंसस्रंसितप्रतिसमाहितशिखण्डभारम्, आकुञ्चितप्रसृतवेल्लितभुजलताभिहतललितकन्दुकम्, आवर्जितबाहुपाशम्, असकृदुत्क्षिप्य-

माणहस्तपादबाह्याभ्यन्तरभ्रान्तकन्दुकम्, अवनमनोन्न-मननैरन्तर्यनष्टदृष्टमध्ययष्टिकं च निषद्योत्थाय, निमील्यो-न्मील्य, स्थित्वा गत्वा चैवातिचित्रं पर्य्यक्रीडत राजकन्या।

'अभिहत्य च भूतलाकाशयोरपि क्रीडान्तराणि दर्शनीयान्येकेनैवानेकेनेव कन्दुकेनादर्शयत्। चन्द्र-सेनादिभिश्च प्रियसखीभिः सह विहृत्य, विहृतान्ते चाभिवन्द्य देवीम्, मनसा मे सानुरागेणेव परिजनेनानु-गम्यमाना, सह सखीभिः कुमारीपुरमगमत्।

'अहञ्चानुरागपरवशः स्ववेश्म गत्वा, कोशदासेन यत्नवदत्युदारं स्नानभोजनादिकमनुभावितोऽस्मि। सायं चोपसृत्य चन्द्रसेना रहसि, मां प्रणिपत्य, पत्युः समीप उपाविशत्। आचष्ट च हृष्टः कोशदासः, "भूयासमेवं यावदायुरायताक्षि त्वत्प्रसादस्य पात्रम्" इति।

'मया तु सस्मितमभिहितम्, "सखे, किमेतद् आश्चर्यम्? अस्ति किञ्चिदञ्जनम्, अनया तदक्तनेत्रया राजसूनुरुपस्थितो वानरीमिवैनां द्रक्ष्यति; विरक्तश्चैनां पुनस्त्यक्ष्यति" इति।

'तया तु स्मेरयास्मि कथितः, "सोऽयमाज्ञाकरो जनोऽत्यर्थमनुगृह्यीत आर्य्येण, यदस्मिन्नेव जन्मनि मानुषं वपुरपनीय वानरीकरिष्यते। तदास्तामिदम्, अन्यथापि सिद्धं नः समीहितम्। अद्य खलु कन्दुकोत्सवे भवन्त-

मवहसितमनोभवाकारमभिलषन्ती, अतिमात्रमायस्यति राजपुत्री। सोऽयमर्थो विदितभावया मया स्वमात्रे, तया च तन्मात्रे, मद्दिष्या च मनुजेन्द्राय निवेदयिष्यते। विदितार्थस्तु पार्थिवस्त्वया दुहितुः पाणिं ग्राहयिष्यति।

"ततश्च त्वदनुजीविना राजपुत्रेण भवितव्यम्, एष हि दैवतासमादिष्टो विधिः। त्वदायत्ते च राज्ये, नालमेव त्वामतिक्रम्य मामवरोद्धुं भीमधन्वा। तत् सह्यतामयं त्रिचतुराणि दिनानि" इति मामामन्त्र्य प्रत्ययासीत्। मम च कोशदासस्य च तदुक्तानुसारेण बहु विकल्पयतोः कथञ्चिद् अक्षीयत क्षपा।

'क्षपान्ते च कृतयथोचितनियमस्तमेव प्रियदर्शन-सुभगमुद्यानोद्देशमुपगतोऽस्मि। तत्रैव चोपसृत्य राजपुत्रो निरभिमानमनुकूलाभिः कथाभिर्मामनुवर्तमानो मुहूर्त्त-मास्त; नीत्वा चोपकार्य्याम्, आत्मसमेन स्नानभोजन-शयनादिव्यतिकरेणोपाचरत्; तल्पगतमायसेन निगडेनाति-बलपुरुषैः पीवरभुजदण्डोपरुद्धम् अबन्धयन्माम्।

'प्रतिबुद्धं च सहसा समभ्यधात्, "अयि दुर्मते, श्रुत-मालपितं हतायाश्चन्द्रसेनाया जालरन्ध्रनिःसृतं तच्चेष्टाव-बोधप्रयुक्तयानया कुब्जया। त्वं किलाभिलषितो वराक्या कन्दुकावत्या? तव किलानुजीविना मया स्थेयम्? त्वद्वचः किलानतिक्रामता मया चन्द्रसेना कोशदासाय दास्यते?" इत्युक्त्वा पार्श्वचरं पुरुषमेकमालोक्याकथयत्,

"प्रक्षिपैनं सागरे" इति। स तु लब्धराज्य इवातिहृष्टः "देव, यथाज्ञापयसि" इति यथादिष्टमकरोत्।

'अहं तु निरालम्बनो भुजाभ्यामितस्ततः स्पन्दमानः किमपि काष्ठं दैवदत्तसुरसोपश्लिष्य, तावदप्लोषि, यावदपासरद् वासरः, शर्वरी च सर्व्वा। प्रत्यूषस्यदृश्यत किमपि वहित्रम्; अमुत्रासन् यवनाः, ते मामुद्धृत्य रामेषुनाम्ने नाविकनायकाय कथितवन्तः, "कोऽप्ययम् आयसनिगडबद्ध एव जले लब्धः पुरुषः। सोऽयम् अपि सिध्येत् सहस्रं द्राक्षाणां क्षणेनैकेन!" इति।

'अस्मिन्नेव क्षणे नैकनौकापरिवृतः कोऽपि मद्गुरभ्यधावत्; अबिभयुर्यवनाः। तावदतिजवा नौकाः श्वान इव वराहमस्मत्पोतं पर्य्यरुत्सत। प्रावर्त्तत संप्रहारः, पराजायिषत यवनाः। तानहमगतीनवसीदतः समाश्वास्यालपिषम्, "अपनयत मे निगडबन्धनम्; अयमहमवसादयामि वः सपत्नान्" इति।

'अमी तथाकुर्व्वन्; सर्व्वांश्च तान् प्रतिभटान् भल्लवर्षिणा भीमटङ्कृतेन शार्ङ्गेण लवलवीकृताङ्गान् अकार्षम्। अवप्लुत्य हतविध्वस्तयोधमस्मत्पोतसंसक्तपोतममुत्र नाविकनायकमनभिसरमभिपत्य जीवग्राहमग्रहीषम्। असौ चासीत् स एव भीमधन्वा। तं चाहमवबुध्य जातव्रीडमब्रवम्, "तात, किं दृष्टानि कृतान्तविलसितानि?"

इति। ते तु सांयात्रिका मदीयेनैव शृङ्खलेन तमतिगाढं बद्ध्वा हर्षकिलकिलारवमकुर्वन्, मां चापूजयन्।

'दुर्वारा तु सा नौरननुकूलवाततुन्ना दूरमभिपत्य कमपि द्वीपं निबिडमाश्लिष्टवती। तत्र च स्वादु पानीयम्, एधांसि, कन्दमूलफलानि[1] च संजिघृक्षवो गाढपातितशिलावलयम् अवातराम। तत्र चासीन्महाशैलः। सोऽहम् "अहो रमणीयोऽयं पर्वतनितम्बभागः, कान्ततरेयं गन्धपाषाणवत्युपत्यका, शिशिरमिदमिन्दीवरारविन्दमकरन्दबिन्दुचन्द्रकोत्तरं गोत्रवारि, रम्योऽयमनेकवर्णकुसुममञ्जरीमञ्जुलतरस्तरुवनाभोगः" इत्यल्पमतरया दृष्ट्या बहु बहु पश्यन्, अलक्षिताध्यारूढक्षोणीधरशिखरः शोणीभूतम् उत्प्रभाभिः पद्मरागसोपानशिलाभिः किमपि नालीकपरागधूसरं सरः समभ्यगमम्।

'तत्र स्नातश्च, कांश्चिदमृतस्वादून् बिसभङ्गान् आस्वाद्य, अंसलग्नकह्लारः, तीरवर्त्तिना केनापि भीमरूपेण ब्रह्मराक्षसेनाभिपत्य, "कोऽसि? कुतस्त्योऽसि?" इति निर्भर्त्संयताभ्यधीयि। निर्भयेन च मया सोऽभ्यधीयत,

---

[1] इहैकवद्भावो वैकल्पिक इति भाष्यस्वरस इति "जातिरप्राणिनाम्" इति सूत्रव्याख्याने भट्टोजिः। तेनात्रैकवद्भावाभावः सूपपादः; यद्वा, अत्र जात्यपेक्षयैनद्रव्यप्रतीतेर्नैकवद्भावः, जातिप्राधान्य एवायमेकवद्भाव इति व्याख्यानात्।

"सौम्य, सोऽहमस्मि द्विजन्मा; अवुहस्तादर्णवम्, अर्णवाद् यवननावम्, यवननावश्चित्वग्रावाणमिनं पर्वतप्रवरं गतो यदृच्छयास्मिन् सरसि विश्रान्तः। भद्रं तव?" इति।

'सोऽब्रूत, "नो चेद् ब्रवीषि प्रश्नानेतान् अश्नामि त्वाम्" इति। मयोक्तम्, "भवतु; पृच्छ तावत्" इति।

'अथावयोरेकयार्थयासीत् संलापः। स यथा—

किं क्रूरं स्त्रीहृदयम् किं गृहिणः प्रियहिताय
दारगुणाः।
कः कामः संकल्पः किं दुष्करसाधनं प्रज्ञा॥ इति।

'स चेदमाकर्ण्य ब्रह्मराक्षसो मामपूपुजत्। अस्मिन्नेव क्षणे नातिप्रौढपुन्नागमुकुलस्थूलानि मुक्ताफलानि सह-सलिलबिन्दुभिरम्बरतलादपतन्। अहं तु "किं न्विदम्?" इत्युच्चक्षुरालोकयन् कमपि राक्षसं काञ्चिदङ्गनां विचेष्टमानगात्रीमाकर्षन्तमपश्यम्। "कथमपहरति स्त्रियमनाचारो नैर्ऋतः!" इति गगनगमनमन्दशक्ति-ग्रस्तश्च समतप्ये। स तु मत्सम्बन्धो ब्रह्मराक्षसः "तिष्ठ तिष्ठ पाप, क्वापहरसि?" इति भर्त्सयन्नुत्थाय राक्षसेन समसृज्यत। तां तु रोषाद् अनपेक्षापविद्धाम्, अमरवृक्षमञ्जरीमिवान्तरिक्षाद् आपतन्तीम् उन्मुख-प्रसारितोभयकरः कराभ्यामग्रहीषम्। तावत्तावुभावपि शैलशृङ्गभङ्गैः, पादपैश्च रभसोन्मूलितैः, मुष्टिपादप्रहारैश्च

परस्परमज्ञपयताम्। पुनरहमतिमृदुनि पुलिनवति कुसुमलवलाञ्छिते सरस्तीरेऽवरोप्य निर्वर्णयंस्तां मत्प्राणैकवल्लभां राजकन्यां कन्दुकावतीमलक्षयम्।

'सा हि मया समाश्वास्यमाना तिर्यङ् मामभिनिरूप्य जातप्रत्यभिज्ञा सकरुणमरोदीत्, अवादीच्च, "नाथ, त्वद्दर्शनादुपोढरागा तस्मिन् कन्दुकोत्सवे पुनः सख्या चन्द्रसेनया त्वत्कथाभिरेव समाश्वासितास्मि। 'त्वं किल समुद्रमध्ये मज्जितः पापेन मद्भ्रात्रा भीमधन्वना' इति श्रुत्वा, सखीजनं परिजनञ्च वञ्चयित्वा, जीवितं जिहासुरेकाकिनी क्रीडावनमुपासरम्। तत्र च मामचकमत कामरूप एष राक्षसाधमः; सोऽयं मया भीतयावधूतप्रार्थनः स्फुरन्तीं मां निगृह्याभ्यधावत्, अत्रैवमवसितोऽभूत्। अहं च दैवात् तवैव जीवितेशस्य हस्ते पतिता। भद्रं तव?" इति।

'श्रुत्वा च तया सहावरुह्य, नावमध्यारोहम्। मुक्ता च नौः प्रतिवातप्रेरिता तामेव दामलिप्तां प्रत्युपातिष्ठत्। अवरूढाश्च वयमश्रमेण। "तनयस्य च तनयायाश्च नाशादनन्यापत्यस्तुङ्गधन्वा सुह्मपतिर्निष्कलः स्वयं सकलत्र एव निष्कलङ्कगङ्गारोधस्यनशनेनोपरन्तुं प्रतिष्ठते। सह तेन मर्तुमिच्छत्यनन्यनाथोऽनुरक्तः पौरवृद्धलोकः" इत्यश्रुमुखीणां प्रजानामाक्रन्दमशृणुम। अथाहमस्मै राज्ञे यथावृत्तमाख्याय तदपत्यद्वयं प्रत्यर्पितवान्। प्रीतेन तेन

जामाता कृतोऽस्मि दामलिप्तेश्वरेण। तत्पुत्रो मदनुजीवी जातः। मदाश्रमेन चामुना प्राणवदुज्झिता चन्द्रसेना कोशदासमभजत्। ततश्च सिंहवर्मसाहाय्यार्थमत्रागत्य भर्तुस्तव दर्शनोत्सवसुखमनुभवामि' इति।

श्रुत्वा 'चित्रेयं दैवगतिः। अवसरेषु पुष्कलः पुरुषकारः' इत्यभिधाय भूयः स्मिताभिषिक्तदन्तच्छदो मन्त्रगुप्ते हर्षोत्फुल्लं चक्षुः पातयामास देवो राजवाहनः। स किल निरोष्ठ्यवर्णमात्मचरितमाचचक्षे।

इति श्रीदण्डिनः कृतौ दशकुमारचरिते मित्रगुप्तचरितं नाम षष्ठ उच्छ्वासः।

---

## मन्त्रगुप्तचरितम्

### [ सप्तम उच्छ्वासः ]

'राजाधिराजनन्दन, नगरन्ध्रगतस्य ते गतिं मार्गयन्नहं च गतः कदाचित्कलिङ्गान्। कलिङ्गनगरस्य नात्यासन्नसंस्थित-जनदाहस्थानसंसक्तस्य कस्यचित् कान्तारधरणिजस्यास्तीर्ण-सरसकिसलयसंस्तरे तले निषद्य निद्रालीढदृष्टिरशयिषि। गलति च कालरात्रिशिखण्डजालकान्धकारे, चरितरक्षसि

चरितनीहारे निजनिलयनिलीननिःशेषजने नितान्तशीते निशीथे घनतरसालशाखान्तरालनिर्ह्रादिनि, नेत्रनिंसिनीं निद्रां निगृह्णन्, कर्णदेशं गतं "कथं खल्वेनानेन दग्धसिद्धेनाहर्निशं निदेशं दित्सता जन एष आयास्यते। क्रियेतास्याणकनरेन्द्रस्य केनचिदनन्तशक्तिना सिद्धरन्तरायः" इति किङ्करस्य कस्यचिदतिकातरं रटितं।

'तदाकर्ण्य "क एष सिद्धः? का च सिद्धिः? किं चानेन किङ्करेण करिष्यते?" इति दिदृक्षाक्रान्तहृदयः किङ्करगतया दिशा किञ्चिदन्तरं गतस्तरलतरनरास्थिशकलरचितालङ्कराक्रान्तकायं, दहनदग्धकाष्ठनिष्ठाङ्गाररजःकृताङ्गरागं, तडिल्लताकारजटाधरं, हिरण्यरेतस्यरण्यचक्रान्धकारराक्षसे क्षणगृहीतनानेन्धनग्रासचञ्चदर्चिषि दक्षिणेतरेण करेण तिलसिद्धार्थकादीन् निरन्तरचटचटायितानाकिरन्तं, कञ्चिदद्राक्षं। तस्याग्रे स कृताञ्जलिः "किं करणीयं, दीयतां निदेशः" इत्यतिष्ठत्। आदिष्टश्चायं तेनातिनिकृष्टाशयेन— "गच्छ, कलिङ्गराजस्य कर्दनस्य कन्यां कनकलेखां कन्यागृहादिहानय" इति।

'स च तथाकार्षीत्। ततश्चैनां त्रासेनालघीयसास्र-जर्जरेण च कण्ठेन रणरणिकागृहीतेन च हृदयेन "हा तात, हा जननि" इति क्रन्दन्तीं कीर्णम्लानशेखरस्रजि शीर्णनहने शिरसिजानां सञ्चये निगृह्यासिना शितासितेन शिरश्छिकर्तिषयाचेष्टत। झटिति चाच्छिद्य तस्य

हस्तात्तां शस्त्रिकां तया निकृत्य तस्य तच्छिरः सजटाजालं निकटस्थस्य कस्यचिज्जीर्णसालस्य स्कन्धरन्ध्रे न्यदधां।

'तन्निध्याय हृष्टतरः स राक्षसः क्षोणाधिरकथयत्—“आर्य, कदर्यस्यास्य कदर्थनात्र कदाचिन्निद्रायाति नेत्रे। तर्जयति[1] त्रासयति च, अकृत्ये चाज्ञां ददाति। तदत्र कल्याणराशिना साधीयः कृतं यदेष नरकाकः कारणानां नारकीणां रसज्ञानाय नीतः शीतेतरदीधितिदेहजस्य नगरं; तदित्थं दयानिधिरनन्ततेजसस्तेऽयं जनः काञ्चिदाज्ञां चिकीर्षति। आदिश, अलं कालहरणेन” इत्यनंसीत्।

'आदिशं च तं—“सखे, सैषा सज्जनाचरिता सरणिः, यदणीयसि कारणेऽनणीयानादरः सन्दृश्यते। न चेदिदं नेच्छसि सेयं सन्नताङ्गयष्टिरक्लेशार्हा सत्यनेनाकृत्यकारिणा-त्यर्थं क्लेशिता, नयैनां निजनिलयं। नान्यदितः किञ्चिदस्ति चित्ताराधनं नः” इति। अथ तदाकर्ण्य कर्णशेखरनिलीननीलनीरजायितां धीरतरलतारकां दृशं तिर्यक्किञ्चिदञ्चितां सञ्चारयन्ती, कण्टकितरक्तगण्डलेखा, रागलज्जान्तरालचारिणी, चरणाग्रेण तिरश्चीननखार्चि-श्चन्द्रिकेण धरणीतलं साचीकृताननसरसिजं लिखन्ती, तरङ्गितदशनचन्द्रिकाणि कानिचिदेतान्यक्षराणि कल-

---

[1] अनुदात्तेत्त्वनिमित्तस्यात्मनेपदस्यानित्यत्वात् साधु।

कण्ठीकलान्यसृजत्[1]—"आर्य, यथा ते चरणसरसिजरज:-कणिका तथाहं चिन्तनीया। यद्यस्ति दया तेऽत्र जने, अनन्यसाधारण: करणीय: स एष चरणाराधनक्रियायां।"

'स चाहं किङ्करानननिहितदृष्टिरगादिषं—"यथेयं हरिणनयना कथयति तथा चेन्नाचरेयं, नयेत नक्रकेतन: क्षणेनैकेनाकीर्तनीयां दशां। जनं चैनं सह नयानया कन्यया कन्यागृहं।" नीतश्चाहं निशाचरेण शारद-जलधरजालकान्ति कन्यकानिकेतनं।

'अथ कलिङ्गराज: सहाङ्गनाजनेन सह च तनयया सकलेन च नगरजनेन दश त्रीणि च दिनानि दिनकर-किरणजालालङ्घनीये, तरलतरङ्गशीकरासारसङ्गशीतले सागरतीरकानने क्रीडारसजातासक्तिरासीत्। अथ तत्र रन्ध्रे आन्ध्रनाथेन जयसिंहेन सलिलतरणसाधनानीत-नानेकसंख्येनानीकेन द्रागागत्यागृह्यत सकलत्र:। सा चानीयत त्रासतरलाक्षी दयिता न: सह सखीजनेन कनकलेखा।

'तदाहं चिन्तयन् दयितां गलितगात्रकान्तिर-तर्कयं—"गता सा कलिङ्गराजतनया जनित्वा जनयित्र्या च सहारिहस्तं। निरस्तधैर्यस्तां स राजा

---

[1] व्यसृजदित्यर्थे श्रोत्रवर्णपरिजिहीर्षया 'असृजत्' इति प्रयोगादवाचकत्वं दुष्परिहरमित्यालङ्कारिका:।

नियतं संजिहृक्षेत् । तदसह्या च सा सती गररसादिना सद्यः संतिष्ठेत । तस्यां च तादृशीं दशां गतायां जनस्यास्यानन्यजेन हन्येत शरीरधारणाशा । का स्याद्गतिः ?” इति ।

‘अत्रान्तरे आन्ध्रनगरादागच्छन्नग्रजः कश्चिदैक्ष्यत । तेन चेयं कथा कथिता—यथा किल जयसिंहेनानेकनिकारदत्तसङ्घर्षणजिघांसितः स कर्दनः कनकलेखादर्शनेधितेन रागेणारक्ष्यत । सा च दारिका यक्षेण केनचिदधिष्ठिता न तिष्ठत्यग्रे नरान्तरस्य । आयस्यति च नरेन्द्रसार्थसंग्रहणेन तन्निराकरिष्यन्नरेन्द्रो न चास्ति सिद्धिरिति ।

‘तेन चाहं दर्शिताशः शङ्करनृत्यरङ्गदेशजातस्य जरत्सालस्य स्कन्धरन्ध्रान्तर्जटाजालं निष्कृष्य तेन जटिलतां गतः कन्याचीरसञ्चयान्तरितसकलगात्रः कांश्चिच्छिष्यानग्रहीषं । तांश्च नानाश्चर्यक्रियातिसंहिताज्जनादाकृष्टान्नचेलादित्यागान्वितग्रहृष्टानकार्षं । अयासिषं च दिनैः कैश्चिदान्ध्रनगरं । तस्य नात्यासन्ने सलिलराशिसदृशस्य सारसश्रेणिशेखरस्य सरसस्तीरकानने कृतनिकेतनः स्थितः शिष्यजनकथितचित्रचेष्टाकृष्टसकलनागरजनाभिसन्धानदक्षः सन् दिशि दिशि प्रोत्यकीर्त्यं जनेन—“य एष जरदरण्यस्थलीसरस्तीरे स्थण्डिलशायी यतिस्तस्य किल सकलानि सरहस्यानि सषडङ्गानि च छन्दांसि रसनाग्रे सन्निहितानि, अन्यानि च शास्त्राणि । येन यानि न ज्ञायन्ते स तेषां

तत्सकाशादर्थनिर्णयं करिष्यति। असत्येन नास्यास्यं संसृज्यते, सशरीरश्चैष दयाराशि:। एतत्संग्रहणाय चिरं चरितार्था दीक्षा। तच्चरणरज:कणै: कैश्चन शिरसि कीर्णैरनेकस्यानेक आतङ्कश्चिरं चिकित्सकैरसंहार्य: संहृत:। तदङ्घ्रिक्षालनसलिलसेकैर्निष्कलङ्कशिरसां नश्यन्ति क्षणेनैकेनाखिलनरेन्द्रयत्नलङ्घितनखण्डतारायहा:। न तस्य शक्यं शक्तेरियत्ताख्यानं। न चास्याहङ्कारकणिका" इति।

'सा चेयं कथानिकजनास्यसञ्चारिणी तस्य कनकलेखाधिष्ठितधनदाशाकरनिराक्रियातिसक्तचेतस: क्षत्रियस्याकर्षणायाशकत्। स चाहरहरागत्यादरेणातिगरीयसार्चयन्नर्थैश्च शिष्यान् संगृह्णन्नधिगतक्षण: कदाचित् काङ्क्षितार्थसाधनाय शनैरयाचिष्ट। ध्यानधीर: स्थानदर्शितज्ञानसन्निधिश्चैनं निरीक्ष्य निचाय्या[1]कथयं—"तात, स्थान एष हि यत्न:। तस्य हि कन्यारत्नस्य सकलकल्याणलक्षणैकराशेरधिगति: क्षीरसागररसनालंकृताया गङ्गादिनदीसहस्रहारयष्टिराजिताया धराङ्गनाया एवासादनाय साधनं। न च स यक्षस्तदधिष्ठायी केनचिन्नरेन्द्रेण तस्या लीलाञ्चितनीलनीरजदर्शनाया दर्शनं सहते, तदत्र सद्यतां वीक्षणानि, यैरहं यतिष्येऽर्थस्यास्य साधनाय" इति।

---

[1] निरीक्ष्य, निचाय्य—अनयोरन्यतरो न पठनीय:। यद्वा, 'निचाय्य' विविच्येत्यर्थ:।

'तथादिष्टे च हृष्टे चितीशे गते निशि निशि निर्निशाकरार्चिषि नीरन्ध्रान्धकारकणनिकरनिगीर्णदशदिशि निद्रानिगडितनिखिलजनदृशि निर्गत्य जलतलनिलीनगाहनीयं नीरन्ध्रं कच्छाच्छिद्रीकृतान्तरालं तदेकतः सरस्तटं तीर्थासन्निकृष्टं केनचित् खननसाधनेनाकार्षं। घनशिलेष्टकाच्छन्नच्छिद्राननं तत्तीरदेशं जनैरशङ्कनीयं निधाय, दिनादिस्नाननिर्णिक्तगात्रस्य, नक्षत्रसन्तानहारयष्टिग्रथितरत्नं क्षणदान्धकारगन्धहस्तिदारणैककेसरिणं, कनकशैलशृङ्गरङ्गलास्यलीलानटं, गगनसागरघनतरङ्गराजिलङ्घनेकनक्रं, कार्याकार्यसाक्षिणं, सहस्राचिंषं सहस्राक्षदिगङ्गनाङ्गरागरागायितकिरणजालं, रक्तनीरजाञ्जलिनाराध्य निजनिकेतनं न्यशिश्रियं।

'याते च दिनत्रये, अस्तगिरिशिखरगैरिकतटसाधारणच्छायतेजसि दिनाधिनाथे, जनाधिनाथः स आगत्य जनस्यास्य धरणिन्यस्तचरणनखकिरणच्छादितकिरीटः कृताञ्जलिरतिष्ठत्। आदिष्टश्च—"दिष्ट्या दृष्टेष्टसिद्धिः। इह जगति न हि निरीहं देहिनं श्रियः संश्रयन्ते। श्रेयांसि च सकलान्यनलसानां हस्ते नित्यसान्निध्यानि। यतस्ते साधीयसा सच्चरितेनानाकलितकलङ्केनार्चितेनाल्पादरचितेनाकृष्टचेतसा जनेनानेन सरस्तथा संस्कृतं, यथेह तेऽद्य सिद्धिः स्यात्। तदेतस्यां निशि गलदर्धायां गाहनीयं। गाहनानन्तरं च सलिलतले सततगतीनन्तः-

सञ्चारिणः सन्निरुह्य यथाशक्ति शय्या कार्या। ततश्च जनस्य चणादाकर्णनीयं जनिष्यते जलसङ्घातस्य किञ्चिदारटितं। शान्ते च तत्र सलिलरटिते क्लिन्नगात्रः किञ्चिदारक्तदृष्टिर्येनाकारेण निर्यास्यसि निचाय्य तं निखिलजननेत्रानन्दकारिणं न स यचः शक्यत्यग्रतः स्थितये। स्थिरतरनिहितस्नेहशृङ्खलानिगडितं च कन्यकाहृदयं चणेनैकेनासहनीयदर्शनान्तरायं स्यात्। अस्याश्च धराङ्गनाया नात्याहृतनिराकृतारिचक्रं चक्रं करतलगतं चिन्तनीयं, न तत्र संशयः। तच्चेदिच्छस्यनेकशास्त्रज्ञानधीरधिषणैरधिकृतैरितरैश्च हितैषिगणैराकलय्य जालिकशतं चानाय्य, अन्तरङ्गनरशतैर्यथेष्टदृष्टान्तरालं सरः क्रियेत, रचा च तीराच्छिंशद्दण्डान्तराले सैनिकजनेन सादरं रचनीया। कस्तज्जानाति यच्छिद्रेणारयश्चिकीर्षन्ति" इति।

'तत्त्वस्य हृदयहारि जातं, तदधिकृतैश्च तत्र कृत्ये रन्ध्रदर्शनासहैरिच्छा च राज्ञः कन्यकातिरागजनितां नितान्तनिश्चलां निश्चित्याथ एष न निषिद्धः। तथास्थितश्च तदासादनदृढतराशयः स आख्यायत—"राजन्, अत्र ते जनान्ते चिरं स्थितं, न चैकत्र चिरस्थानं नः शस्तं। कृतकृत्यश्चेह न द्रष्टासि। 'यस्य ते राष्ट्रे ग्रासाच्छादितं तस्य ते किञ्चिदनाचर्य कार्यं गतिरार्यगर्ह्या' इति, अत्रैतच्चिरस्थानस्य कारणं। तच्चाद्य सिद्धं। गच्छ स्वगृहान्।

यथार्हजलेन हृद्यगन्धेन स्नातः सितस्रगङ्गरागः आगत्यार्थ-सिद्धये यतेथाः" इति ।

'स किल कृतज्ञतां दर्शयन्—"असिद्धिरेषा सिद्धिः, यदसन्निधिरिहार्याणां । कष्टा चेयं निःसंगता, या निरागसं दासजनं त्याजयति । न च निषेधनीया गरीयसां गिरः" इति स्नानायं गृहानयासीत् । अहं च निर्गत्य निर्जने निशीथे सरस्तीररन्ध्रनिलीनः सन्नीषच्छिद्रदत्तकर्णः स्थितः । स्थिते चार्धरात्रे कृतयथादिष्टक्रियः स्थानस्थान-रचितरक्षः स राजा जालिकजनानानीय निराकृतान्तः-शल्यं शङ्काहीनः सरःसलिलं सलीलगतिरगाहत । गतं च कीर्णकेशं संहृतकर्णनासं सरसस्तलं हास्तिनं नक्रलीलया नीरातिनिलीनया तं तथा शयानं कन्धरायां कन्यग्रा न्यग्रहीषं । खरतरकालदण्डघट्टनातिचण्डैश्च करचरण-घातैर्निर्दयदत्तनिग्रहः क्षणेनैकीनाजहात्स चेष्टां । ततश्चा-कृष्य तच्छरीरं छिद्रे निधाय नीरान्निरयासिषं ।

'सङ्गतानां च सैनिकानां तदत्यचित्रीयताकारान्तरग्रहणं । गजस्कन्धगतः सितच्छत्रादिसकलराजचिह्नराजितश्चण्डतर-दण्डिदण्डताडनत्रस्तजनदत्तान्तरालया राजवीथ्या यातस्तां निशां रसनयनैर्निरस्तनिद्रारतिरनैषं । नीते च जनाच्चि-लक्ष्यतां लाक्षारसदिग्धदिग्गजशिरःसदृक्षे शक्रदिगङ्गनारत्ना-दर्शेऽर्कचक्रे कृतकरणीयः किरणजालकरालरत्नराजि-राजितराजार्हासनाध्यासी यथासदृशाचारदर्शिनः शङ्का-

यन्त्रिताङ्गान्सन्निधिनिषादिनः सहायानगादिषं—"दृश्यतां शक्तिरार्षी, यत्तस्य यतेरजेयस्ये[1]न्द्रियाणां संस्कारेण नीरजसा नीरजसान्निध्यशालिनि सहर्षालिनि सरसि सरसिजदल-सन्निकाशच्छायस्याधिकतरदर्शनीयस्राकारान्तरस्य सिद्धिरासीत्। अद्य सकलनास्तिकानां जायेत लज्जाननं शिरः। तदिदानीं चन्द्रशेखरनरकशासनसरसिजासनादीनां त्रिदशेशानां स्थानान्यादररचितनृत्यगीताराधनानि क्रियन्तां, क्रियन्तां च गृहादितः क्लेशनिरसनसहान्यर्थिसार्थैर्धनानि" इति। आश्चर्यरसातिरेकहृष्टदृष्टयस्ते "जय जय जगदीश दश दिशः, स्वगयन्विजिन यशसादिराजयशासि" इत्यसकृदाशासत्रारचयन् यथादिष्टाः क्रियाः।

'स चाहं दयितायाः सखीं हृदयस्थानीयां शशाङ्कसेनां कन्यकां कदाचित्कार्यान्तरागतां रहस्याचचि[2]—"कच्चिदयं जनः कदाचिदासीद्दृष्टः?" इति। अथ सा हर्षकाष्ठां गतेन हृदयेनेषदालक्ष्य दशनदीधितिलतां लीलालसं लासयन्ती, ललिताञ्चितकरशाखान्तरितदन्तच्छदकिसलया: हर्षजलक्लेदजर्जरनिरञ्जनेक्षणा, रचिताञ्जलिः "नितरां जाने यदि न स्यादैन्द्रजालिकस्य जालं किञ्चिदेतादृशं। कथं चैतत्? कथय" इति स्नेहनिर्यन्त्रणं शनैरगादीत्। अहं

---

[1] अजय्यस्य इत्यर्थः।

[2] 'आचचिक्षि' इति पाठः प्रामादिकः।

चास्य कात्र्त्स्न्येनाख्याय, तदाननसंक्रान्तेन सन्देशेन सज्जनव्य सहचर्या निरतिशयं हृदयाह्लादं,[1] ततश्चैतया दयितया निर्गलीकृतातिसत्कृतकलिङ्गनाथन्यायदत्तया संगत्यान्ध्र-कलिङ्गराज्यशासी तस्यास्यारिणा लिलङ्घयिषितस्याङ्गराजस्य साहायकायालघीयसा साधनेनागत्यात्र ति सखिजनसंगतस्य याद्दच्छिकदर्शनानन्दरश्मिलङ्घितचेता जातः' इति।

तस्य तत्कौशलं स्मितज्योत्स्नाभिषिक्तदन्तच्छदः सह सुहृद्भिरभिनन्द्य 'चित्रमिदं महामुनेर्वृत्तम्। अत्रैव खलु फलितमतिकष्टं तपः। तिष्ठतु तावन्नर्म। हर्षप्रकर्ष-स्पृशोः प्रश्नासत्त्वयोर्दृष्टमिह स्वरूपम्' इत्यभिधाय, पुनः 'अवतरतु भवान्' इति बहुस्तुते विश्रुते विकचराजीवसदृशं दृशं चिक्षेप देवो राजवाहनः।

इति श्रीदण्डिनः कृतौ दशकुमारचरिते मन्त्रगुप्तचरितं नाम सप्तम उच्छ्वासः।

---

[1] निरोष्ठ्योऽस्मिन् मन्त्रगुप्तभाषिते सर्वत्र वैयाकरणैकदेशिनां समय-मनुसरद्भिरावसानिकस्य मकारस्यानुस्वारभावो विहितो व्याकरणार्णवकर्णधारै-राचार्यवर्यैः।

# गोमिनीकथा

## [ षष्ठ उच्छ्वासः ]

"किं गृहिणः प्रियहिताय ?—दारगुणाः"

अस्ति द्रविडेषु काञ्ची नाम नगरी। तस्यामनेककोटिसारः श्रेष्ठिपुत्रः शक्तिकुमारो नामासीत्। सोऽष्टादशवर्षदेशीयश्चिन्तामापेदे— 'नास्त्यदाराणामननुगुणदाराणां वा सुखं नाम। तत्कथं नु गुणवद्विन्देयं कलत्रम्' इति। अथ परप्रत्ययाहृतेषु दारेषु याद्दच्छिकीं सम्पत्तिमनभिसमीक्ष्य[1] कार्तान्तिको नाम भूत्वा वस्त्रान्तपिनद्धशालिप्रस्थो भुवं बभ्राम। 'लक्षणज्ञोऽयम्' इत्युपेत्य कन्याः

---

[1] यद्यपि सर्वत्र 'अनभिसमीक्ष्य' इति पाठ उपलभ्यते, "स्थितेर्गतिश्चिन्तनीया" इति कुशकाशावलम्बनन्यायेन 'याद्दच्छिकीं स्वेच्छानुसारिणीं सम्पत्तिं गुणसम्पदम् अनभिसमीक्ष्य अनवलोक्य' इति व्याख्यातुमपि शक्यते, 'याद्दच्छिकीं कादाचित्कीं सम्पत्तिं गुणसम्पदम् अनभिसमीक्ष्य अवहुमन्यमानः' इति व्याख्यान्तरमपि कल्पयितुं सुशकम्, तथापि "अभिसमीक्ष्य" इति पाठ एव ग्रन्थकारस्वरस इति प्रतिभाति, परप्रत्ययाहृतदारेषु घुणाक्षरन्यायेन कदाचिदनुगुणगुणसम्पत्सद्भावेऽपि प्रायेण तद्विपरीतत्वस्यैव सन्दर्शनात् स्वयमेवासावनुरूपपत्नीसंग्रहणे समुद्यतः इत्यर्थस्यैव प्रकरणानुगुणत्वात्।

कन्यावन्तः प्रदर्शयाम्बभूवुः। यां काञ्चिल्लक्षणवतीं सवर्णां कन्यां दृष्ट्वा स किल स्म ब्रवीति—'भद्रे, शक्नोषि किमनेन शालिप्रस्थेन गुणवदन्नमस्मानभ्यवहारयितुम्?' इति। स हसितावधूतो गृहाद्गृहं प्रविश्याभ्रमत्।

एकदा तु शिविषु कावेरीतीरपत्तने सह पितृभ्याम् अवसितमहर्धिम् अवशीर्णभवनसारां धात्र्या प्रदर्श्यमानां काञ्चन विरलभूषणां कुमारीं ददर्श। अस्यां संसक्तचक्षुश्चातर्कयत्—'अस्याः खलु कन्यकाया अवयवा नातिस्थूला नातिकृशा नातिह्रस्वा नातिदीर्घा न विकटा मृजावन्तश्च। सेयमाकृतिर्न व्यभिचरति शीलम्, आसज्जति च मे हृदयमस्यामेव। तत्परीक्ष्यैनामुद्वहेयम्। अविमृश्यकारिणां हि नियतमनेकाः पतन्त्यनुशयपरम्पराः' इति स्निग्धदृष्टिराचष्ट—'भद्रे, कच्चिदस्ति कौशलं शालिप्रस्थेनानेन सम्पन्नमाहारमस्मानभ्यवहारयितुम्?' इति।

ततस्तया वृद्धदासी साकूतमालोकिता। तस्य हस्तात्प्रस्थमात्रं धान्यमादाय क्वचिदलिन्दोद्देशे सुसिक्तसंमृष्टे दत्तपादशौचमुपावेशयत्। सा कन्या तान् गन्धशालीन् संक्षुद्य, मात्रया विशोष्य, आतपे मुहुर्मुहुः परिवर्त्य, स्थिरसमायां भूमौ नालीपृष्ठेन मृदुमृदु घट्टयन्ती तुषैरखण्डैस्तण्डुलान् पृथक् चकार। जगाद च धात्रीम्—'मातः, एभिस्तुषैरर्थिनो भूषणमृजाक्रियाक्षमैः

स्वर्णकाराः। तेभ्य इमान् दत्त्वा लब्धाभिः काकिणीभिः स्थिरतराण्यनत्यार्द्राणि नातिशुष्काणि काष्ठानि मितम्पचां स्थालीमुभे शरावे चाहर' इति।

तथा कृते तया तांस्तण्डुलान् अनतिनिम्नोत्तानविस्तीर्णकुक्षौ ककुभोलूखले लोहपत्रवेष्टितमुखेन समशरीरेण विभाव्यमानमध्यतानवेन व्यायतेन गुरुणा खादिरेण मुसलेन चतुरललितोत्क्षेपणावक्षेपणायासितभुजम् असकृदङ्गुलीभिरुद्धृत्योद्धृत्यावहत्य शूर्पशोधितकणकिंशारुकादींस्तण्डुलानसकृदद्भिः प्रक्षाल्य क्वथितपञ्चगुणे जले दत्तचुल्लीपूजा प्राक्षिपत्। प्रश्लथावयवेषु प्रस्फुरत्सु तण्डुलेषु मुकुलावस्थामतिवर्तमानेषु संक्षिप्यानलम् उपहितमुखपिधानया स्थाल्यान्नमण्डमगालयत्। दर्व्या चावघट्य मात्रया परिवर्त्य समपक्वेषु सिक्थेषु तां स्थालीमधोमुखीम[1]वातिष्ठिपत्। इन्धनान्यन्तःसाराण्यम्भसा समभ्युक्ष्य प्रशमिताग्नीनि कृष्णाङ्गारीकृत्य तदर्थिभ्यः प्राहिणोत्—'एभिर्लब्धाः

---

[1] अयं प्रयोगश्चिन्त्यः, "अद्रवं मूर्तिमत् स्वाङ्गम्" इत्यादि-स्वाङ्गलक्षणस्यात्राप्रवृत्तेर्ङीषो दुर्लभत्वात्। तथा च भट्टोजिः—"'फलमुखी कारणमुखी चानवस्था' इत्यादिप्रयोगाः प्रामादिकाः" इति। महाकविप्रयोगात् "उपपन्ना हि दारेषु प्रभुता सर्वतोमुखी" "प्रायेण सामग्र्यविधौ गुणानां पराङ्मुखी विश्वसृजः प्रवृत्तिः" "चतुर्द्वारमुखी बभौ। अयोध्या" इत्यादिवत् कथञ्चित् सोढव्यः।

काकिणीर्दत्त्वा शाकं घृतं दधि तैलमामलकं चिञ्चाफलं च यथालाभमानय' इति।

तथानुष्ठिते च तया द्वित्रानवदंशानुपपाद्य तदन्नमण्ड-मार्द्रवालुकोपहितनवशरावगतमतिमृदुना तालवृन्तानिलेन शीतलीकृत्य सलवणसम्भारं दत्ताङ्गारधूपवासं च सम्पाद्य, तदप्यामलकं श्लक्ष्णपिष्टमुत्पलगन्धि कृत्वा धात्रीमुखेन स्नानाय तमाह्वयत्। तया च स्नानशुद्धया दत्ततैलामलकः क्रमेण सस्नौ। स्नातः सिक्तमृष्टे कुट्टिमे फलकमारुह्य पाण्डुहरितस्य त्रिभागशेषलूनस्याङ्गनकदलीपलाशस्योपरि शरावद्वयं दत्तमार्द्रमभिमृशन्नतिष्ठत्।

सा तु तां पेयामेवाग्रे समुपाहरत्। पीत्वा चापनीताध्वक्लमः प्रहृष्टः प्रक्लिन्नसकलगात्रः स्थितो-ऽभूत्। ततस्तस्य शाल्योदनस्य दर्वीद्वयं दत्त्वा सर्पिर्मात्रां सूपमवदंशं चोपजहार। इमं च दध्ना च त्रिजातकाव-चूर्णितेन सुरभिशीतलाभ्यां च कालशेयकाञ्जिकाभ्यां शेषमन्नमभोजयत्। सशेष एवान्धस्यसावतृप्यत्, अयाचत च पानीयम्। अथ नवभृङ्गारसम्भृतमगुरुधूपधूपितम् अभिनवपाटलाकुसुमवासितम् उत्फुल्लोत्पलग्रथितसौरभं वारि नालीधारात्मना पातयाम्बभूव। सोऽपि मुखोपहित-शरावेण हिमशिशिरकणकरालिताहणायमानाक्षिपक्ष्मा धारारवाभिनन्दितश्रवणः स्पर्शसुखोद्भिन्नरोमाञ्चककर्कश-कपोलः परिमलप्रवाहोत्पीडफुल्लघ्राणरन्ध्रो माधुर्यप्रकर्षा-

वर्जितरसनेन्द्रियस्तदच्छं पानीयमाकण्ठं पपौ। शिरः-कम्पसंज्ञावारिता च पुनरपरेण करकेणाचमनमदत्त कन्या। वृद्धया तु तदुच्छिष्टमपोह्य हरितगोमयोपलिप्ते कुट्टिमे स्वमेवोत्तरीयकर्पटं व्यवधाय चणमशेत।

परितुष्टश्च विधिवदुपयम्य कन्यां निन्ये। पतिं च दैवतमिव मुक्तनिद्रा पर्यचरत्। गृहकार्याणि चाहीन-मन्वतिष्ठत्। परिजनं च दाक्षिण्यनिधिरात्माधीनमकरोत्। तद्गुणवशीकृतश्च भर्ता सर्वमेव कुटुम्बं तदायत्तमेव कृत्वा तदेकाधीनजीवित¹शरीरस्त्रिवर्गं निर्विवेश। तद्ब्रवीमि—'गृहिणः प्रियहिताय दारगुणाः' इति।

---

¹ अत्रापि "शिवभागवत"वत् समासः।

# काव्यमीमांसा

## कविचर्य्या राजचर्य्या च

गृहीतविद्योपविद्यः काव्यक्रियायै प्रयतेत। नामधातुपारायणे, अभिधानकोशः, छन्दोविचितिः, अलङ्कारतन्त्रं च काव्यविद्याः; कलास्तु चतुःषष्टिरुपविद्याः।[2] सुजनोपजीव्यकविसन्निधिः, देशवार्त्ता, विदग्धवादः, लोकयात्रा, विद्वद्गोष्ठ्यश्च काव्यमातरः पुरातनकविनिबन्धाश्च। किञ्च—

स्वास्थ्यं प्रतिभाभ्यासो[3] भक्तिर्विद्वत्कथा बहुश्रुतता।
स्मृतिदार्ढ्यमनिर्वेदश्च मातरोऽष्टौ कवित्वस्य॥

---

[1] राजशेखरकृत-काव्यमीमांसायां दशमोऽध्यायः।

[2] कामसूत्रादिषु यः कलानां समुद्देश उपलभ्यते तत्राभिधानकोशच्छन्दोऽलङ्कारादीनामपि सन्निवेशदर्शनाद्राजशेखराभिमतकलास्ततो भिन्ना इति प्रतीयते।

[3] "यः शब्दग्राममर्थसार्थमलङ्कारतन्त्रमुक्तिमार्गमन्यदपि तथाविधमधिहृदयं प्रतिभासयति सा प्रतिभा। अविच्छेदेन शीलनम् अभ्यासः।" भक्तिः समाध्यपरपर्य्याया मनस एकाग्रता उत्साहो वा। अनिर्वेदः—जनानामनादरेण जातनिर्वेदाः कीट्स्-प्रभृतयः कविप्रकाण्डा अकाल एव कालकवलताम् उपजग्मुः।

अपि च, नित्यं शुचिः स्यात्। त्रिधा च शौचम्—वाक्शौचम्, मनःशौचम्, कायशौचञ्च। प्रथमे शास्त्रजन्मनो[1], तार्तीयीकं तु सनखच्छेदौ पादौ,[2] सताम्बूलं मुखम्, सविलेपनमात्रं[3] वपुः, महार्हमनुल्वणं[4] च वासः, सकुसुमं शिर इति। शुचि शीलनं हि सरस्वत्याः संवननम्[5] आमनन्ति। स यत्स्वभावः कविस्तदनुरूपं काव्यम्; यादृशाकारश्चित्रकरस्तादृशाकारमस्य चित्रमिति प्रायोवादः। स्मितपूर्वमभिभाषणम्, सर्वत्रोक्तिगर्भम् अभिधानम्,[6] सर्वतो रहस्यान्वेषणम्, परकाव्यदूषणवैमुख्यमनभिहितस्य, अभिहितस्य तु यथार्थमभिधानम्।

तस्य भवनं सुसंमृष्टम्, ऋतुषट्कोचितविविधस्थानम्, अनेकतरुमूलकल्पितापाश्रय[7]वृक्षवाटिकम्, सक्रीडापर्वतकम्, सदीर्घिकापुष्करिणीकम्, ससरित्समुद्रावर्त्तकम्,

---

[1] शास्त्राद् जन्म ययोस्ते।

[2] पादौ इति हस्तयोरप्युपलक्षणम्।

[3] प्रभूतानुलेपनन्तु ग्राम्यत्वमेवास्य सूचयेत् इति मात्रपदोपादानम्।

[4] अनुल्वणम्—'उल्वणम्' आडम्बरमयम् (gaudy), तद्व्यतिरिक्तम् अनाडम्बरमिति भावः।

[5] वशीकरणम्।

[6] व्यङ्ग्यमयम् (suggestive) सम्भाषणम्।

[7] अपाश्रयशब्देनात्र वेदिका बोध्या।

सकुल्याप्रवाहम्, सबर्हिणहरिणहारीतम्, ससारसचक्रवाकहंसम्, सचकोरक्रौञ्चकुररशुकसारिकम्, घर्म्मक्लान्तिचौरम्, सभूमिधारागृहयन्त्रलतामण्डपकम्, सदोलाप्रेङ्ख[1] च स्यात्।

काव्याभिनिवेशखिन्नस्य मनसस्तद्विनिर्वेदच्छेदाया-प्यमूकपरिजनं विजनं वा तस्य स्थानम्। अपभ्रंश-भाषणप्रवणः परिचारकवर्गः, समागधभाषाभिनिवेशिन्यः परिचारिकाः, प्राकृत-संस्कृतभाषाविद आन्तःपुरिकाः, मित्राणि चास्य सर्वभाषाविन्दि भवेयुः। सदःसंस्कार-विशुद्धर्थं सर्व्वभाषाकुशलः, शीघ्रवाक्, चार्वक्षरः, इङ्गिताकारवेदी, नानालिपिज्ञः, कविः, लाक्षणिकश्च[2] लेखकः स्यात्।

स्वभवने हि भाषानियमं यथा प्रभुर्विदधाति तथा भवति। श्रूयते हि मगधेषु शिशुनागो नाम राजा; तेन दुरुच्चारानष्टौ वर्णानपास्य स्वान्तःपुर एव प्रवर्त्तितो नियमः, टकारादयश्चत्वारो मूर्द्धन्यास्तृतीयवर्जमूष्माणस्त्रयः क्षकारश्चेति। श्रूयते च सूरसेनेषु कुविन्दो नाम राजा;

---

[1] दोला स्वनामख्याता। प्रेङ्खा उद्यानादिषु क्रीडार्थं वृक्षबद्धकाष्ठादिमयी दुलनीति ख्याता इति रघुनाथः। दोल्यते दोला काष्ठमयी रज्ज्वालम्बा च; प्रेङ्ख्यते प्रेङ्खा हिन्दोलाख्या इति चीरस्वामी।

[2] छन्दोभेदानामार्यादीनामिन्द्रवज्रादीनाञ्च काव्यभेदानां सर्गबन्धादीनां रूपकादीनाञ्च लक्षणेषु निपुणः।

तेन परुषसंयोगाक्षरवर्जमन्तःपुर एवेति समानं पूर्वेण[1]। श्रूयते च कुन्तलेषु सातवाहनो नाम राजा; तेन[2] प्राकृतभाषात्मकमन्तःपुर एवेति समानं पूर्वेण। श्रूयते चोज्जयिन्यां साहसाङ्को नाम राजा, तेन च संस्कृतभाषात्मकमन्तःपुर एवेति समानं पूर्वेण।

तस्य सम्पुटिका, सफलकखटिका, समुद्गकः, सलेखनीकमसीभाजनानि ताडिपत्राणि भूर्जत्वचो वा, सलोहकण्टकानि तालदलानि, सुसम्मृष्टा भित्तयः सततसन्निहिताः स्युः। 'तद्धि काव्यविद्यायाः परिकरः' इत्याचार्य्याः; 'प्रतिभैव परिकरः' इति यायावरीयः[3]।

कविः प्रथममात्मानमेव कल्पयेत्।—'कियान्मे संस्कारः, क्व भाषाविषये शक्तोऽस्मि, किंरुचिर्लोकः, परिवृढो वा कीदृशि गोष्ठ्यां विनीतः, क्वास्य वा चेतः संसज्जत[4] इति बुद्ध्वा भाषाविशेषमाश्रयेत' इत्याचार्य्याः।

---

[1] समानं पूर्वेणेति—प्रवर्त्तितो नियम इति शेषः।

[2] *Cf.* केऽभूवन्नाढ्यराजस्य राज्ये प्राकृतभाषिणः।
काले श्रीसाहसाङ्कस्य के न संस्कृतवादिनः॥
आढ्यराजः सातवाहनः। साहसाङ्कः विक्रमादित्यः।

[3] यायावरकुलोत्पन्नः कविराजोपाधिको ग्रन्थकृद् राजशेखरकविः। "प्रायेणाचार्य्याणामियं शैली यत् स्वाभिप्रायमपि परोपदेशमिव वर्णयन्ति।"

[4] अयमेव पाठः समीचीनः स्वारसिकश्च। षस्जेः परस्मैपदित्वेऽपि "हेतुमति च" इत्यत्र "यदभिप्रायेषु सज्जन्ते" इति भाष्यप्रयोगादस्यात्मनेपदित्वमपीच्छन्त्यभियुक्ताः।

'एकदेशकवेरियं नियमतन्त्रणा, स्वतन्त्रस्य पुनरेकभाषावत् सर्वा अपि भाषाः स्युः' इति यायावरीयः।

देशविशेषवशेन च भाषाश्रयणं दृश्यते ; तदुक्तम्—

[1]'गौडाद्याः [2] संस्कृतस्थाः परिचित-
रुचयः प्राकृते लाट[3]देश्याः
सापभ्रंशप्रयोगाः सकलमरुभुवष्टक्कभादानकाश्च[4]।
आवन्त्याः[5] पारियात्राः[6] सह दशपुर[7]जैर्भूतभाषां[8] भजन्ते
यो मध्येमध्यदेशं निवसति स कविः सर्व्वभाषानिषण्णः।

जानीयाल्लोकसाम्मत्यं कविः कुत्र ममेति च।
असम्मतं परिहरेन्मतेऽभिनिविशेत च॥
जनापवादमात्रेण न जुगुप्सेत चात्मनि।
जानीयात् स्वयमात्मानं यतो लोको निरङ्कुशः॥

---

[1] शृण्वन्ति लटभं लाटाः प्राकृतं संस्कृतद्विषः।
अपभ्रंशेन तुष्यन्ति स्वेन नान्येन गुर्जराः॥
ब्रह्मन् विज्ञापयामि त्वां स्वाधिकारजिहासया।
गौडस्त्यजतु वा गाथामन्यो वास्तु सरस्वती॥

[2] गौड—(roughly speaking) West Bengal.

[3] लाट—South continental Gujrat.

[4] मरुभू—Marwar. टक्क—Sialcot. भादानक—(Budaon ?)

[5] अवन्ति—Ujjaini. [6] पारियात्र—Jaipur.

[7] दशपुर—Mandasor. [8] भूतभाषा—Paiśācī.

'गीतसूक्तिरतिक्रान्ते स्तोता देशान्तरस्थिते ।
प्रत्यक्षे तु कवौ लोकः सावज्ञः सुमहत्यपि ॥
प्रत्यक्षकविकाव्यं च रूपं च कुलयोषितः ।
गृहवैद्यस्य विद्या च कस्मैचिद् यदि रोचते ॥
इदं महाहासकरं विचेष्टितं
परोक्तिपाटच्चरतारतोऽपि यत् ।
सदुक्तिरत्नाकरतां गतान् कवीन्
कवित्वमात्रेण समेन निन्दति ॥
वचः स्वादु सतां लेह्यं लेशस्वाद्वपि कौतुकात् ।
बालस्त्रीहीनजातीनां काव्यं याति मुखान्मुखम् ॥
कार्य्यावसरसज्जानां परिव्राजां महीभुजाम् ।
काव्यं सद्यःकवीनां च भ्रमत्यष्टा दिशो दश ॥
पितुर्गुरोर्नरेन्द्रस्य सुतशिष्यपदातयः ।
अविविच्यैव काव्यानि स्तुवन्ति च पठन्ति च ॥'

किञ्च 'नार्द्धकृतं पठेदसमाप्तिस्तस्य फलम्' इति कविरहस्यम् । न नवीनमेकाकिनः पुरतः ; स हि स्वीयं ब्रुवाणः कतरेण साक्षिणा जीयेत । न च स्वकृतिं बहु मन्येत ; पक्षपातो हि गुणदोषौ विपर्यासयति । न च दृप्येत्, दर्पलवोऽपि सर्वसंस्कारानुच्छिनत्ति । परैश्च परीक्षयेत् ; यदुदासीनः पश्यति न तदनुष्ठातेति प्रायोवादः[1]।

---

[1] तथा चोक्तम्—"यानि पश्यन्त्युदासीना: कर्त्ता तानि न पश्यति ।"

कविमानिनं तु छन्दोऽनुवर्त्तनेन रञ्जयेत्; कविम्मन्यस्य हि पुरतः सूक्तमरण्यरुदितं स्याद् विप्लवेत च। तदाह—

'इदं हि वैदग्ध्यरहस्यमुत्तमं
पठेन्न सूक्तिं कविमानिनः पुरः।
न केवलं तां न विभावयत्यसौ
स्वकाव्यबन्धेन विनाशयत्यपि॥

अनियतकालाः प्रवृत्तयो विप्लवन्ते, तस्माद्दिवसं निशां च यामक्रमेण चतुर्द्धा विभजेत्। स प्रातरुत्थाय कृतसन्ध्यावरिवस्यः सारस्वतं सूक्त[1]मधीयीत। ततो विद्यावसथे यथासुखमासीनः काव्यस्य विद्या उपविद्याश्चानुशीलयेदाप्रहरात्; न ह्येवंविधमन्यत्[2] प्रतिभाहेतुर्यथा प्रत्यग्रसंस्कारः। द्वितीये काव्यक्रियाम्; उपमध्याह्नं स्नायादविरुद्धं भुञ्जीत च, भोजनान्ते काव्यगोष्ठीं प्रवर्त्तयेत्। कदाचिच्च प्रश्नोत्तराणि[3] भिन्दीत। काव्य-

---

[1] Ṛgveda, VI. 61.

[2] 'किमपि' इति शेषः।

[3] यत्र प्रश्नादेवोत्तरस्योन्नयनं भवति तत् प्रश्नोत्तरम्। तच्च द्विविधम्—बहिरन्तश्च। तत्र (१) बहिःप्रश्नोत्तरं यथा—

प्रायः कार्य्ये नियुज्यन्ते नराः सर्वत्र कीदृशाः।
धानेत्ययं भवेच्छब्दो नौवाची वद कीदृशः॥

समस्याधारणा,[1] मातृकाभ्यास:,[2] चित्रा योगा[3] इत्यायाम-त्रयम्।[4] चतुर्थ एकाकिन: परिमितपरिषदो वा पूर्वाह्ण-भागविहितस्य काव्यस्य परीक्षा; रसावेशत: काव्यं विरचयतो न च विवेक्त्री दृष्टिस्तस्मादनुपरीक्षेत। अधिकस्य त्याग:, न्यूनस्य पूरणम्, अन्यथास्थितस्य परिवर्त्तनम्, प्रस्मृतस्यानुसन्धानं चेत्यहीनम्।

सायं सन्ध्यामुपासीत सरस्वतीञ्च; ततो दिवा-विहितपरीक्षणस्याभिलेखनमाप्रदोषात्। द्वितीयतृतीयौ साधु शयीत, सम्यक्स्वापो वपुष: परमारोग्याय। चतुर्थे

---

उत्तरम्—सावधाना:। ('सौ' औकार-सहित: 'श्वधा' धकाररहितश्च 'ना:'।) (२) अन्त:प्रश्नोत्तरं यथा—

का काली, का मधुरा, का शीतलवाहिनी गङ्गा।

के दारपोषणरता:, कम् बलवन्तं न बाधते शीत:॥

[1] समस्यते संक्षिप्यते इति 'समस्या'। 'काव्यस्य' श्लोकस्य 'समस्या' पाद इत्यर्थ:। तस्या 'धारणा' क्रीडार्थं वादार्थं च। यथा—

हीनहत्या दधात्येव लाघवं महतामपि।

इति मत्वा द्विपद्वेषी "मृगात् सिंह: पलायते"।

[2] यद्यपि कलासु अक्षमातृका-धारणमातृकयोरुल्लेखो दृश्यते तथापि तयोरत्रानुपयोगात् समस्याधारणा चित्रयोगा इत्यनयो: साहचर्य्याच्च "पौर्व्वापर्य्य-परामृष्ट: शब्दोऽन्यां कुरुते मतिम्" इति न्यायेन बिन्दुमत्यादीनां प्रहेलिका-भेदानामत्र ग्रहणं बोद्धव्यम्।

[3] चित्रा योगा:—नानाप्रकारदौर्भाग्यैकेन्द्रियपलितीकरणादय इति वात्-स्यायनसूत्रव्याख्याने जयमङ्गल:। अत्र तेषामनुपयोगाच्चित्रकाव्यार्थकत्वं बोध्यम्।

सप्रयत्नं प्रतिबुध्येत ; ब्राह्मे मुहूर्त्ते मनः प्रसीदत् तांस्तानर्थानध्यक्षयतीत्याहोरात्रिकम् ।

चतुर्विधश्चासौ—असूर्य्यम्पश्यः, निषस्सः, दत्तावसरः, प्रायोजनिकश्च । यो गुहागर्भभूमिगृहादिप्रवेशान्नैष्ठिकवृत्तिः कवते, असावसूर्य्यम्पश्यः ; तस्य सर्वे कालाः । यः काव्यक्रियायामभिनिविष्टः कवते, न च नैष्ठिकवृत्तिः, स निषस्सः ; तस्यापि त एव कालाः । यः सेवादिकमविरुन्धानः कवते, स दत्तावसरः ; तस्य कतिपये कालाः । निशायास्तुरीयो यामार्द्धः, स हि सारस्वतो मुहूर्त्तः । भोजनान्तःसौहित्यं हि स्वास्थ्यमुपस्थापयति । विषयान्तरविनिवृत्तं हि चित्तं यत्र यत्र प्रणिधीयते, तत्र तत्र गुडूचीलाग्रं लगति । यदा यदा चात्मनः क्षणिकतां मन्यते, स स काव्यकरणकालः । यस्तु प्रस्तुतं किञ्चन संविधानकमुद्दिश्य कवते, स प्रायोजनिकः, तस्य प्रयोजनवशात् कालव्यवस्था । बुद्धिमदाहार्य्यबुद्ध्यो[2]रियं नियममुद्रा ; औपदेशिकस्य[1] पुनरिच्छैव सर्वे कालाः, सर्वा च नियममुद्राः[3] ।

---

[1] जन्मान्तरसंस्कारप्रवृत्तभारतीकः 'बुद्धिमान्' ; इहजन्माभ्यासोद्भासितभारतीक आहार्य्यबुद्धिः ।

[2] मन्त्रतन्त्राद्युपदेशदर्शितवाग्विभवो दुर्बुद्धिरौपदेशिकः । स "वल्गु फल्गु च जल्पति ।" विस्तरस्तु काव्यमीमांसायां चतुर्थेऽध्याये द्रष्टव्यः ।

[3] मन्त्रतन्त्रादिना सिद्धसरस्वतीकस्य स्वतन्त्रेच्छस्य तस्य नियमानुमशक्यत्वात् ।

पुरुषवद् योषितोऽपि कवीभवेयुः; संस्कारो ह्यात्मनि समवैति, न स्त्रैणं पौरुषं वा विभागमपेक्षते। श्रूयन्ते दृश्यन्ते च राजपुत्र्यो महामात्यदुहितरो गणिकाः कौतुकिभार्य्याश्च शास्त्रप्रहतबुद्धयः कवयश्च।

सिद्धं च प्रबन्धमनेकादर्शगतं कुर्य्यात्; यदित्थं कथयन्ति—

'निक्षेपो विक्रयो दानं देशत्यागोऽल्पजीविता।
त्रुटिको वह्निरम्भश्च प्रबन्धोच्छेदहेतवः॥
दारिद्र्यं व्यसनासक्तिरवज्ञा मन्दभाग्यता।
दुष्टे द्विष्टे च विश्वासः पञ्च काव्यमहापदः॥'

पुनः समापयिष्यामि, पुनः संस्करिष्यामि, सुहृद्भिः सह विवेचयिष्यामीति कर्त्तुराकुलता राष्ट्रोपप्लवश्च प्रबन्धविनाशकारणानि।

'अहर्निशा[1]विभागेन य इत्थं कवते कृती।
एकावलीव तत्काव्यं सतां कण्ठेषु लम्बते॥
यथा यथाभियोगश्च संस्कारश्च भवेत् कवेः।
तथा तथा निबन्धानां तारतम्येन रम्यता॥
मुक्तके कवयोऽनन्ताः सङ्घाते कवयः शतम्।
महाप्रबन्धे तु कविरेको द्वौ दुर्लभास्त्रयः॥'

---

[1] अहःसहिता निशा अहर्निशा इति कथञ्चिद् व्याख्येयम्।

अत्राह स्म—

'बह्वपि स्वेच्छया कामं प्रकीर्णमभिधीयते ।
अनुज्झितार्थसम्बन्धः प्रबन्धो दुरुदाहरः ॥[1]

रीतिं विचिन्त्य विगणय्य गुणान् विगाह्य
शब्दार्थसार्थमनुसृत्य च सूक्तिमुद्राः ।
कार्यो निबन्धविषये विदुषा प्रयत्नः
के पोतयन्त्ररहिता जलधौ प्लवन्ते ॥

लोढाभिधोपनिषदां सविधे बुधाना-
मभ्यस्यतः प्रतिदिनं बहुदृष्टसनोऽपि ।
किञ्चित् कदाचन कथञ्चन सूक्तिपाका-
द्वाक्तत्त्वमुन्मिषति कस्यचिदेव पुंसः ॥

इत्यनन्यमनोवृत्तेर्निःशेषेऽस्य क्रियाक्रमे ।
एकपत्नीव्रतं धत्ते कवेर्देवी सरस्वती ॥

सिद्धिः सूक्तिषु सा तस्य जायते जगदुत्तरा ।
मूलच्छायां न जानाति यस्याः सोऽपि गिरां गुरुः [2] ॥'

---

[1] Śiśupālavadham, II. 93.

[2] अपिभिन्नक्रमः । 'सः' प्रसिद्धो 'गिरां गुरुः' बृहस्पतिः 'अपि' 'यस्याः' जगदुत्तरायाः सिद्धेः 'मूलच्छायां' लेशमपि 'न' 'जानाति' अवगच्छति । तदेकवल्लभाया वाग्देव्याः प्रसादेन तस्य तथाविधा गुणसम्पत् प्रादुर्भवति या किल गिरां गुरोर्बृहस्पतेर्मनोरथानामप्यविषय इत्यर्थः ।

राजा कविः कविसमाजं विदधीत; राजनि कवौ सर्वो लोकः कविः स्यात्। स काव्यपरीक्षार्थं सभां कारयेत्। सा षोडशभिः स्तम्भैश्चतुर्भिर्द्वारैरष्टभिर्मत्तवारणो[1]भिरुपेता स्यात्; तदनुलग्नं राज्ञः केलिगृहम्। मध्येसभं चतुःस्तम्भान्तरा हस्तमात्रोत्सेधा समणिभूमिका वेदिका, तस्यां राजासनम्; तस्य चोत्तरतः संस्कृताः कवयो निविशेरन्। बहुभाषाकवित्वे यो यत्राधिकं प्रवीणः स तेन व्यपदिश्यते, यस्त्वनेकत्र प्रवीणः स सङ्क्रम्य तत्र तत्रोपविशेत्। ततः परं वेदविद्याविदः प्रामाणिकाः पौराणिकाः स्मार्त्ता भिषजो मौहूर्त्तिका अन्येऽपि तथाविधाः। पूर्वेण प्राकृताः कवयः, ततः परं नट-नर्त्तक-गायन-वादक-वाग्जीवन-कुशीलव-तालावचरा अन्येऽपि तथाविधाः। पश्चिमेनापभ्रंशिनः कवयः, ततः परं चित्रलेप्यकृतो माणिक्यबन्धका वैकटिकाः स्वर्णकार-वर्द्धकि-लोहकारा अन्येऽपि तथाविधाः। दक्षिणतो भूतभाषाकवयः, ततः परं भुजङ्ग-गणिकाः प्लवक-शौभिक-जम्भक-मल्लाः शस्त्रोपजीविनोऽन्येऽपि तथाविधाः।

तत्र यथासुखमासीनः काव्यगोष्ठीं प्रवर्त्तयेत्, भावयेत्,

---

1 वारण्डा इति भाषा, यद्वा निर्यूहः।

परोक्षेत च। वासुदेव[1]-सातवाहन[2]-शूद्रक[3]-साहसाङ्का[4]दीन् सकलान् सभापतीन् दानमानाभ्यामनुकुर्य्यात्। तुष्ट-पुष्टाश्चास्य सभ्या भवेयुः, स्थाने च पारितोषिकं लभेरन्; लोकोत्तरस्य काव्यस्य च यथार्हा पूजा कवेर्वा। अन्तरान्तरा च काव्यगोष्ठीं शास्त्रवादाननुजानीयात्; मध्वपि नानवदंशं स्वदते। काव्यशास्त्रविरतौ विज्ञानिष्व-भिरमेत। देशान्तरागतानां च विदुषामन्यद्वारा सङ्गं कारयेदौचित्यात्, यावत्स्थिति पूजां च। वृत्तिकामांश्चोप-जपेत् संगृह्णीयाच्च; पुरुषरत्नानामेक एव राजोदन्वान् भाजनम्। राजचरितं च राजोपजीविनोऽप्यनु-

---

[1] वासुदेवः खिस्तीये द्वितीयशतके वर्त्तमानः कुशान-नरपतिः, देवभूतेर-मात्यात्स्वयमाकारतो भिन्नः।

[2] सातवाहनः—"श्रीमत्कुन्तलजनपदेश्वर—प्रतिष्ठानपत्तनाधिप—शत-कर्णोपनामक—दीपकर्णात्मज—मलयवतीप्राणप्रिय—कलापप्रवर्त्तकशर्ववर्मसखी-सख—मलयवत्युपदेशपण्डितीभूत—त्यक्तभाषात्रयस्वीकृतपैशाचिकपण्डितराज—गुणाढ्यनिर्मित—भस्मीभवद्‌बृहत्कथावशिष्टसप्तमांशावलोकनप्राकृतादिवाक्पञ्चक (?)—कविवत्सल—हालाद्युपनामकः" खिस्तीये प्रथमे शतके समुद्भूत इत्यैतिहासिकानां घण्टाघोषः।

[3] शूद्रकः—मृच्छकटिकनाटकप्रणेता नृपचक्रवर्त्ती खिस्तजन्मनः पूर्व्वं धरातलं मण्डयामासेति केचित्।

[4] साहसाङ्कः—स्वनामख्यातो विक्रमादित्यः।

कुर्य्युः; राज्ञ एव ह्यसावुपकारो यद्राजोपजीविनां संस्कारः।

महानगरेषु च काव्यशास्त्रपरीक्षार्थं ब्रह्मसभाः कारयेत्; तत्र परीक्षोत्तीर्णानां ब्रह्मरथयानं पट्टबन्धश्च। श्रूयते चोज्जयिन्यां काव्यकारपरीक्षा—

'इह कालिदास-मेण्ठावत्रामर-रूपसूर-भारवयः।
हरिचन्द्र-चन्द्रगुप्तौ परीक्षिताविह विशालायाम्॥'[1]

---

[1] भर्तृमेण्ठो हयग्रीववध-महाकाव्यकर्त्ता; राजशेखर-कविर्बालरामायणे बालभारते च स्वात्मानमस्यैवावतारत्वेनोपवर्णयति। तद् यथा—

बभूव वल्मीकभवः कविः पुरा
ततः प्रपेदे भुवि भर्तृमेण्ठताम्।
क्रमादभूद् यो भवभूतिरेखया
स वर्त्तते सम्प्रति राजशेखरः॥

रामायणाश्रितं नाटकमपि किञ्चित् तेन कृतं स्यात्; आर्य्यसूरनामा सौगतः कविरत्र स्मृतः सूरी भवेत्; हरिचन्द्रो बाणभट्टपूर्वकालीनः प्रसिद्धः कश्चित् गद्यकाव्यकर्त्ता। तथा च सदुक्तिकर्णामृते—

सुबन्धौ भक्तिर्नः क इह रघुकारे न रमते
धृतिर्दाक्षीपुत्रे हरति हरिचन्द्रोऽपि हृदयम्।
विशुद्धोक्तिः सूरः प्रकृतिमधुरा भारविगिर-
स्तथाप्यन्तर्मोदं कमपि भवभूतिर्वितनुते॥

श्रूयते च पाटलिपुत्रे शास्त्रकारपरीक्षा—

'अत्रोपवर्ष-वर्षा[1]विह पाणिनि-पिङ्गलाविह व्याडिः ।
वररुचि-पतञ्जली इह परीक्षिताः ख्यातिमुपजग्मुः ॥'

इत्थं सभापतिर्भूत्वा यः काव्यानि परीक्षते ।
यशस्तस्य जगद्व्यापि स सुखी तत्र तत्र च ॥

---

[1] वर्षोपवर्षप्रभृतीनां चरितानि बृहत्कथाश्रिते कथासरित्सागरे कथापीठलम्बके निबद्धानि तत एव द्रष्टव्यानि ।